# THE CHATUSSÛTRÎ

FROM

Shrimat Râmânujâchâryâ's

## SHRIBHASHYA

EDITED WITH A GLOSS

BY

**Pandit Vasudevashastri Abhyankar,**
Fergusson College, Poona.

POONA :

Printed and published by Hari Narayan Gokhale
at "Dnyan Prakash" Press.

1904.



Rs 2.

# श्रीभाष्ये चतुःसूत्री.

( श्रीमद्रामानुजाचार्यप्रणीता )



## अभ्यंकरोपाह्ववासुदेवशास्त्रिकृत

समासोक्तिटीकासहिता ।

सा च

पुण्यपत्तने

ज्ञानप्रकाशनाम्निमुद्रणालयेमुद्रिता



शकाब्दा १८२६







मूल्यम् रूपकद्वयम् ( रु० २ )

# भूमिका.

—:o:—

पुरा किलात्मतत्त्वज्ञानं कृतयुगे नारायणाद्विनिष्पन्नमपि त्रेतायां किंचिदन्यथाऽभूत् । द्वापरे च गौतमकविशापदग्धं सदज्ञानस्वरूपमेवाभवत् । ततश्चेन्द्रादयो देवा अपि सङ्कीर्णबुद्धयः सन्तो ब्रह्मेशानौ पुरस्कृत्य नारायणं शरणं जग्मुः । स्वकार्यं च विज्ञापयामासुः । ततो भगवान्पुरुषोत्तमः पराशरात्सत्यवत्यामवतीर्णो भूत्वा ब्रह्मसूत्राणि प्रणिनाय । तेषां च सूत्राणां स्वारसिकमर्थं भगवद्बोधायनप्रणीतवृत्त्यादिष्वालोच्यापि स्वोत्प्रेक्षितार्थानुसारेण केचन मायावादिप्रभृतयः सूत्राक्षराणि व्याकुलयांचक्रुः युक्त्याभासैश्च लोकान्वञ्चयामासुः । अतस्तदनुग्रहाय प्रवृत्ताः श्रीमद्रामानुजाचार्या वृत्तिं द्रमिडभाष्यादिप्रबन्धांश्चानुसृत्यैव सूत्राक्षराणि व्याचिख्यासवः श्रीभाष्यं प्रणिन्युः । तत्र च श्रुति–ब्रह्मसूत्र–जैमिनिसूत्र–पाणिनिसूत्र–भगवद्गीता विष्णुपुराण–नाथमुनि–वार्तिक–वृत्ति–द्रमिडभाष्य–गौडपादकारिकात्मसिद्धि–वाक्यकार–सनत्सुजातीयादिवाक्यानि प्रमाणत्वेन संगृहीतानि । ' रामानुजाचार्याश्चेमे शेषावतारभूता द्रविडदेशे प्रेमधुलाख्यायां ( पेरंबुदूर इति प्र. ) पुरि ग्रहवेदाकाशभू–( १०४९ ) परिमिते शके केशवभट्टात्कान्तिमत्यां समभूवन् । समुच्चयवादचणो यादवप्रकाशश्चैषां मातुलो विद्यागुरुश्च ' इति श्रूयते ।

मतं चैषां विशिष्टाद्वैतम् । अत्र च यद्यपि चित् अचित् ईश्वरश्चेति तत्त्वत्रयं तथापि चिदचिद्रूपशरीरविशिष्ट ईश्वर एक एवेत्येतन्मतं ' विशिष्टाद्वैत ' शब्देन व्यवह्रियते । चिदचिद्रूपशरीरविशिष्टस्येश्वरस्याद्वैतमैक्यमित्यर्थः । विशिष्टयोरैक्यमिति वा । सूक्ष्मचिदचिदात्मकशरीरविशिष्ट ईश्वरः कारणम् । स एव स्थूलचिदचिदात्मकशरीरविशिष्टः कार्यमिति विशिष्टयोरैक्यात् । द्वैतेन विशिष्टमद्वैतमिति कर्मधारयो वा । अस्मिन्नद्वैतेऽन्तर्भूतद्वैतस्य सत्वात् । चित्–जीवः । स च सुखादिवैचित्र्यात्प्रतिशरीरं भिन्नः, अणुपरिमाणः, ज्ञानाश्रयश्च । अहं जानामीति प्रत्ययात् । न तु ज्ञानस्वरूपः । अहं ज्ञानामितिप्रत्ययाभावात् । कर्ता भोक्ता च स एव । ज्ञानस्यैवावस्थाविशेषः कर्तृत्वं

भोक्तृत्वं च । तच्चेश्वराधीनम् । अचित्–जडो घटादिः । स च सत्य एव ननु मायिकः । ईश्वरस्तयोर्नियन्ता परमात्मा । ज्ञानाद्यष्टगुणाश्रयः ननु निर्गुणः । निर्गुणवाक्यैश्च हेय-गुणराहित्यमेव प्रतिपाद्यते । स च विभुः । मोक्षावस्थायामपि न जीवब्रह्मणोरैक्यम् । किं तु साम्यमात्रम् । अधिकं तु जिज्ञासुभिस्तत्तद्ग्रन्थानालोच्य स्वयमूहनीयम् ।

तदिदं श्रीभाष्यं श्रीमत्सुदर्शनाचार्याः श्रुतप्रकाशिकाख्यव्याख्यया समलंचक्रुः । किं त्वत्राभिनिवेशमर्थयमानानामप्यमुष्य भाष्यस्य दुर्बोधतां श्रुतप्रकाशिकायाश्चात्यन्तविस्तृतिमालोच्य मन्दमतीनामस्मान्निवृत्तिमुत्प्रेक्षमाणेन मयाऽनायासेन संक्षेपेण सारभूतार्थबोधिनी समासोक्तिः सिद्धित्रयतत्त्वत्रयश्रुतप्रकाशिकादिग्रन्थानुसारेणैव यथामति वितन्यते । दोषाश्चात्रत्या गुणैकप्रेमशीलैर्विद्वद्भिः क्षन्तव्या इति सविनयं प्रार्थये—

**अभ्यंकरोपाह्व–वासुदेवशास्त्री.**

शके १८२६ क्रोधीनाम संवत्सरे
आधिकज्येष्ठशुद्धप्रतिपत् ।

---

## आदर्शपुस्तकसंज्ञा.

१ ‘ कलकत्ता ’ राजधान्यां मुद्रितं मूलमात्रं ‘ क ’ इति संज्ञितम् ।

२ काश्यां मुद्रितं श्रुतप्रकाशिकासमेतं ‘ ख ’ इति संज्ञितम् ।

३ तैलङ्गदेशे तैलङ्गलिप्यां मुद्रितं श्रुतप्रकाशिकासमेतं डा. भांडारकर इत्येतेभ्यो लब्धं ‘ ग ’ इति संज्ञितम् ।

---

# श्रीभाष्य--चतुःसूत्र्या अनुक्रमणिका.

**इति श्रीभाष्यचतुःसूत्र्या अनुक्रमणिका समाप्ता ॥**

---

# श्रीभाष्ये चतुःसूत्री ।



**श्रीमते रामानुजाय नमः ।**

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥ १ ॥

---

श्रीगणेशाय नमः

अथ श्रीभाष्यव्याख्या समासोक्तिः प्रारभ्यते ।

ध्यायंध्यायं सच्चिदानन्दरूपं स्मारंस्मारं पादपद्मं गुरूणाम् । ग्राहंग्राहं पूर्वटीकाकृदुक्तीस्तन्मूलैवा ग्रथ्यते कापि टीका ॥ १ ॥ श्रीभाष्यसिन्धाववमज्जतां श्रुतप्रकाशिकैकैव तरी विराजते । न लभ्यते सापि च साम्प्रतं नृणामतः समासोक्त्युडुपं प्रकाश्यते ॥ २ ॥ प्रारिप्सितस्य प्रबन्धस्याविघ्नसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलमाचरति—**अखिलेति** । भवतीति भुवनं कार्यवर्गः तस्य जन्म उत्पत्तिः स्थेमा स्थितिः भङ्गो नाशः । आदिशब्देन सृष्ट्याद्यौपयिकमन्तःप्रवेशनियमनादि गृह्यते । एतादृशी लीला यस्य । लीलाशब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्वस्वच्छन्दचेष्टितत्वादिकमभिप्रेतम् । विशेषेण नताः प्रह्वीभूता अशेषविद्याविशेषनिष्ठा देवमनुष्यादिभेदेन विविधा ये प्राणिनः । भगवज्ज्ञानेन लब्धसत्ताकाः प्राणिनोऽत्र भूतशब्देन गृह्यन्ते । तत्सम्बन्धी व्रातः तस्य रक्षा रक्षणमिष्टप्रापणपर्यन्तानिष्टनिवारणरूपम् । तद्विषयैका प्रधानभूता दीक्षा सङ्कल्पो यस्य । उपासकसम्बन्धिनोऽपि भगवतैव रक्ष्यन्ते इति तत्सम्बन्धी व्रात इत्युक्तम् । तदुक्तम् ‘ आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः । वैष्णवो नः कुले जातः स नः सन्तारयिष्यति ’ इति । श्रूयते नित्यमिति श्रुतिः । अनेनापौरुषेयत्वान्निर्दोषत्वं विवक्षितम् । तस्याः शिरोभूते । शिरःशब्देन श्रुतेरनन्यपरत्वं सूच्यते । विशेषेण दीप्ते

पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥ २ ॥

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः,

---

निरतिशयानन्दरूपत्वेन परमपुरुषार्थत्वात् । श्रियो निवासभूते । अनेन नित्यविभूतिमत्त्वं सूच्यते । एतादृशे परस्मिन्ब्रह्मणि मम भक्तिरूपा शेमुषी बुद्धिर्भवत्वित्यर्थः ।

**पाराशर्येति** । पाराशर्यो व्यासः । पाराशर्यशब्देन जन्मोत्कर्षः सूचितो भवति । नारायणाद्विनिष्पन्ने ज्ञाने गौतमऋषेःशापादज्ञानतां गते सति सङ्कीर्णबुद्धयो देवा नारायणं शरणं जग्मुः । ततो भगवान्पुरुषोत्तमः पराशरात्सत्यवत्यामवतीर्ण इति हि स्कान्दे प्रसिद्धम् । तस्य वचस्तदभिमतोऽर्थः । वचःशब्दस्यार्थे तात्पर्यम् । अत एवाग्निमविशेषणसङ्गतिः । तद्रूपां सुधाम् । ब्रह्मण्युपनिषण्णेत्युपनिषद् । तद्रूपो यो दुग्धाब्धिः । तन्मध्यादुद्धृताम् । दुग्धशब्देन पूर्वभागादप्युपनिषदः सारत्वं सूच्यते । यथा ' आरण्यकं च वेदेभ्यः ' इति । अब्धिशब्देनालोचितानामुपनिषदामानन्त्यं सूच्यते । मध्यशब्देन सर्ववाक्यानां मुख्यार्थापरित्यागःसूच्यते । मध्यस्य सर्वपर्यन्त देशापेक्षया तुल्या ह्यायतिः । उध्दृतशब्देनातिनिम्नदेशनिमग्नोद्धरणमभिदधता निःशेषार्थग्रहणं सूच्यते। संसारस्य तापत्रयरूपत्वात्तद्रूपो योऽग्निस्तस्य विशेषेण यद्दीपनम्। विद्यालब्धेः पूर्वं कदाचिदप्यनिवार्यत्वात् । तेन व्यपगतप्राणा ये आत्मानो जीवात्मानस्तेषां संजीवनीं संसारोन्मोचनकर्त्रीम् । प्राणशब्देनेह परमात्मोच्यते । तस्य व्यपगमश्च तज्ज्ञानतद्दर्शनतत्प्राप्तिष्वन्यतमस्याप्यभावः । पूर्वाचार्या बोधायनादयस्तैः सुरक्षिताम् । बोधायनोहि व्यासस्य साक्षाच्छिष्यः सूत्रवृत्तिं चकारेति प्रसिद्धम् । बहूनां चन्द्रो वा या मतयस्तासां व्याघातेन परस्परविरोधेन दूरस्थिताम् । कस्यापि सूत्रयथार्थज्ञानाभावात् । निजाक्षरैरानीतां भाष्येण समीपमानीताम्। एतादृशीं वचःसुधाम् । भौमाः भूमिसम्बन्धिनः । देवादीनामन्यथापि ज्ञानप्राप्तिसम्भवादेतदुक्तिः। सुष्ठु सारासारविवेककृन्मनो येषां ते अन्वहं पिबन्तु । रसस्यातिशयादतृप्तिकरीयं सुधेति भावः ।

**भगवदिति** । अनेन बोधायनस्य शंकरादिभ्योप्याप्ततमत्वं ध्वन्यते । बोधायनेन अतिविस्तीर्णा वृत्तिः कृता । द्रमिडभाष्यकारादयोऽपि परपक्षप्रतिक्षेपाद्यनादरेणाति-

तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।

# अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्रायम् 'अथ' शब्द आनन्तर्ये भवति । 'अतः' शब्दो वृत्तस्य हेतुभावे । अधीतसाङ्गसशिरस्कवेदस्य अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तास्थिरफलब्रह्मजिज्ञासा हि अनन्तरभाविनी । ब्रह्मणो जिज्ञासा 'ब्रह्मजिज्ञासा'। ब्रह्मण–इति कर्मणि षष्ठी। 'कर्तृकर्मणोः कृति (पा. सू. २।३।६५) इति विशेषविधानात् । यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः,

---

संक्षिप्तान्ग्रन्थानरचयन् । अतिविस्तीर्णातिसंकुचितग्रन्थानां साकल्यमायुष्मद्बुद्धिमज्जनप्रचुरेष्वेव भवति । नहीदानींतनपुरुषाणां सर्वेषां शतायुष्ट्वं यावज्जीवं ग्रन्थपरिश्रमः सहजधीविशेषाश्च सन्ति । तस्मात्परमतनिरासाद्यर्थमनतिविस्तरतयासुग्रहत्वार्थं च सूत्रं व्याख्यातव्यम् । **तन्मतानुसारेण** । न तु स्वोत्प्रेक्षितमतान्तरेण । **सूत्राक्षराणि** । सूत्रस्थपदानां प्रकृतिप्रत्ययविभागानुगुणं वदामः । न तु स्वोत्प्रेक्षितार्थेषु सूत्राणि यथाकथंचिद्योजयितव्यानीति भावः । **व्याख्यास्यन्ते** । व्याङ्भ्यामुपसर्गाभ्यामपेक्षितविस्तरसंक्षेपौ द्योनितौ ।

**अत्रेति** । मङ्गलं तु नाथशब्दवाच्यम् । अपि तु शङ्खस्वनादिवच्छ्रूयमाणोऽथशब्दो मङ्गलावह इत्योंकारस्येवार्थान्तरपरत्वेऽपि मङ्गलत्वं सिध्यति । **आनन्तर्ये इति** । अधिकारार्थत्वं तु न युक्तम् । अधिकारो हि प्रस्तावः । तस्य च 'प्रारभ्यते' इत्युक्तिं विनाऽपि प्रारम्भादेवावगमात् । **अत इति** । वृत्तस्येतीदंशब्दार्थः । हेतुभाव इति तसिल्प्रत्ययार्थः । आनन्तर्यं हेतुभावं चोपपादयति । **अधीतेति** । अल्पमस्थिरं च फलं यस्य तादृशस्य केवलस्य ब्रह्मज्ञानरहितस्य कर्मणो ज्ञानं अधिगतं येनेत्यर्थः । केवलकर्मज्ञानमेव वृत्तं वर्तिष्यमाणब्रह्मजिज्ञासाहेतुः । अनन्तमविनाशि स्थिरं च फलं मोक्षरूपं यस्येति ब्रह्मणो विशेषणम् । जिज्ञासाया अपीदं विशेषणं सम्भवति । तस्या अप्यागमोत्थविवेकादिजन्यज्ञानद्वारेण मोक्षहेतुत्वात् । **कर्त्रिति** । कृत्प्रत्ययप्रकृतिभूतधातुवाच्यक्रियानिरूपितकर्तृकर्मवाचकाच्छब्दाच्छष्ठीति तत्सूत्रार्थः । **यद्यपीति** । ब्रह्मसम्बन्धिजिज्ञासेत्यर्थे किं जिज्ञास्यमिति जिज्ञासायाः कर्माकाङ्क्षायामर्थाद्ब्रह्मण

तथापि आक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते न च 'प्रतिपदविधाना षष्ठी न समस्यते' इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः। 'कृद्योगा षष्ठी समस्यते'—इति प्रतिप्रसवसद्भावात्। 'ब्रह्म' शब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन 'ब्रह्म' शब्दः। बृहत्त्वञ्च स्वरूपेण गुणैश्च यत्र अनवधिकातिशयं, सोऽस्य मुख्योर्थः। स च सर्वेश्वर एव। अतो 'ब्रह्म' शब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनाऽयोगाद्भगवच्छब्दवत्।

---

एव कर्मत्वं लभ्यत इति भावः। **तथापीति**। सम्बन्धिषष्ठ्यामपेक्षतः प्राप्तस्यापि कर्मत्वस्य विलम्बोपस्थितिकत्वम्। कर्मणि षष्ठ्यां तु तस्य षष्ठीवाच्यत्वाच्छीघ्रोपस्थितिकत्वामिति तदेव युक्तम्। **प्रतिपदेति**। विशेषविहिता या षष्ठी तदन्तस्य न समास इति तदर्थः। **कृद्योगा**। कर्तृकर्मणोरिति सूत्रेण विहिता। **प्रतिप्रसवः**। अपवादस्यापवादः। ब्रह्मशब्दार्थमाह—**ब्रह्मशब्देनेति**। बद्धजीवस्यापि निरस्तकतिपयदोषत्वात्तद्व्यावृत्त्यर्थं निखिलेत्युक्तिः। तथापि मुक्तेऽतिव्याप्तिरतःस्वभावत इति। **अनवधिकेति**। अत्रापि स्वभावत इति संबध्यते। तेन गुणानामविद्याकल्पितत्वनिरासः। अनवधिकः अतिशयो यस्यैतादृशः असङ्ख्येयः कल्याणकारकः गुणगणो यस्येति बहुव्रीहिगर्भो बहुव्रीहिः। ब्रह्मगुणातिशयस्य च वाङ्मनसागोचरत्वाऽनवधिकत्वम्। अनवधिकातिशयशब्देन नित्यसिद्धव्यावृत्तिः। तद्गुणानां जगद्व्यापारननुगुणत्वेन भगवद्गुणापेक्षया सावधिकातिशयत्वात्। **सर्वत्रेति**। भगवद्व्यतिरिक्तस्थले केवलबृहत्वगुणयोगेन गौणो ब्रह्मशब्दप्रयोगः। मुख्यार्थमाह—**बृहत्त्वमिति**। बृहत्वं महत्वम्। स्वरूपतो गुणतश्चानवधिकातिशयमहत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तम्। भगवद्गुणानां स्वरूपतस्तादृशमहत्त्वात्तत्रातिव्याप्तिवारणाय गुणत इति। तावन्मात्रोक्तौ यद्यपि न दोषस्तथापि शब्दशक्तेरसंकोचस्य स्वतः प्राप्तत्वात्तथोक्तिः। **मुख्यवृत्तः**। वाचकः। **औपचारिकः**। लाक्षणिकः। सर्वत्र मुख्यः कुतो न स्यादित्याशङ्क्याह—**अनेकार्थेति**। तदुक्तं गारुडे 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि। तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने। यस्मिन्प्रयुज्यमाने तु गुणयोगः सुपुष्कलः। तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः' इति। **भगवच्छब्दवदिति**। तथा च भगवच्छब्दस्य पुरुषोत्तम एव मुख्यत्वमन्यत्रामुख्यत्वं पराशरेणोक्तम्।

तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वरो जिज्ञासाकर्मभूतं 'ब्रह्म'। ज्ञातुमिच्छा 'जिज्ञासा'। इच्छाया इष्यमाणप्रधानत्वात्, इष्यमाणं ज्ञानमिह विधीयते।

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्य अनन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरम्, 'अत' एव हेतोः 'ब्रह्म' ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः, वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं,

---

**तापत्रयम्**। आध्यात्मिकाधिभौतिकाधिदैविकरूपम्। **अमृतत्वाय**। मोक्षाय। **अत इति**। निर्दोषमङ्गलगुणाकरस्य सर्वेश्वरस्यैव तापत्रयातुरैर्जिज्ञास्यत्वादित्यर्थः। **इच्छाया इति**। यथा 'प्राङ्मुखो भुञ्जीत' इत्यत्र भुजिधातोर्विधिप्रत्ययान्तत्वाद्भोजनस्य कर्तव्यत्वे प्रतीतेऽपि भोजनस्य रागप्राप्तत्वात्प्राङ्मुख्यविधावेव तात्पर्यमवगम्यते तथात्रेच्छाया विधेयत्वासम्भवात्तद्विषयश्रुतविचारात्मकज्ञानविधावेव तात्पर्यमवगम्यते। **इष्यमाणेति**। इष्यमाणं ज्ञानं प्रधानं यस्यास्तत्वादित्यर्थः। क्रियायाः कर्मसिध्यर्थत्वेन तच्छेषत्वात्क्रियापेक्षया कर्मणः प्राधान्यं बोध्यम्। **विधीयत इति**। अज्ञातज्ञापनमिह विधिः। नत्वप्रवृत्तप्रवर्तनम्। रागतः प्रवृत्तेर्वक्ष्यमाणत्वात्। अत स्तेन ग्रन्थेन न विरोधः। रागतः प्रवृत्तस्यापि पूर्वपक्षयुक्त्याऽनारम्भणीयताबुद्धौ सत्यानारम्भणीयत्वज्ञापनमज्ञातज्ञापनम्।

सूत्रस्य वाक्यार्थमाह-**मीमांसेति**। मीमांसाया हि भागद्वयं कर्ममीमांसा ब्रह्ममीमांसा चेति। तत्र कर्ममीमांसा जैमिनिप्रतिपादिता द्वादशाध्यायी पूर्वमीमांसाशब्देन व्यवह्रियते। ब्रह्ममीमांसा त्वियं चतुरध्यायी उत्तरमीमांसाशब्देन व्यवह्रियते। कर्माधिगमस्यैव पूर्ववृत्तत्वमित्यत्र वृत्तिकारोक्तिं प्रमाणयति-**तदाहेति**। न केवलं वृत्तिकारोक्तिरेव प्रमाणं किंतु तदुक्ता युक्तिरपीत्याह-**वक्ष्यति चेति**। **ऐकशास्त्र्यम्**। एकशास्त्रत्वम्। उभयत्रापि धर्मस्यैव प्रतिपाद्यमानत्वात्। अलौकिकं श्रेयः साधनं हि धर्मः। स च साध्यरूपः क्रियादिः पूर्वभागेन प्रतिपाद्यते। सिद्धस्तु ब्रह्मरूपो धर्मोऽनेनोत्तरभागेन प्रतिपाद्यते। सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः। यथा 'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्' इति। यद्यपि कर्मब्रह्ममीमांसयोरैकशास्त्र्यमविवक्षितं जैमिनिना तथापि

संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति। अतः, प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः।

मीमांसाशास्त्रम्,–'अथातो धर्मजिज्ञासा' (जै. सू. १।१।१) इत्यारभ्य। 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' (ब्र. सू. ४।४।२२) इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्। तथाहि। प्रथमं तावत्, स्वाध्यायोऽध्येतव्य–इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधी-

---

तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तम्। यतोऽतदर्थतया कृतमपि योग्यमपेक्षितं तादर्थ्यमर्हति। पूर्वसिद्धतडागस्य पश्चात्कल्पितग्रामार्थत्ववत्। न च 'आम्नायस्य क्रियार्थत्वात्' (जै. सू. १।२।१) इति सिद्धपरवाक्यानां क्रियाशेषत्वं जैमिनिना कण्ठोक्तमेकशास्त्रत्वे विरुध्यत इति वाच्यम्। उत्सर्गापवादन्यायेन शास्त्रैक्याविरोधात्। व्याकरणे 'कर्मण्यण्' (पा. सू. ३।२।१) 'आतोऽनुपसर्गे कः' (पा. सू. ३।२।३) इति वत्। सामान्येन सिद्धपरवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किं विधिशेषत्वं नवेति विचार्य स्वयं पुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वं, स्वयं पुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानां नतच्छेषत्वमिति हि निर्णेतुं युक्तम्। **शारीरकं** ब्रह्ममीमांसा। जगच्छरीरः परमात्मा शारीरः। 'तस्यैष एव शारीर आत्मा' (तै. २।४।१) इति श्रुतेः। तद्विषयं शास्त्रं शारीरकमित्युच्यते। लक्षणशब्दोऽध्यायवाची। एतच्छारीरकं जैमिनीयेन सह मिलितं सत् षोडशलक्षणेन षोडशाध्यायरूपत्वेन संहितं नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया संगतमिति शास्त्रैकत्वसिद्धिरित्यर्थः। **प्रतिपिपादयिषितेति**। यथा जैमिनीये प्रकृतिविकृतिप्रयोजनभेदेन षट्कभेदः यथा वा प्रमाणाद्यर्थभेदेनाध्यायभेदस्तद्वदत्र साध्यसिद्धरूपधर्मभेदेन पूर्वोत्तरमीमांसयोर्भेदो न तु शास्त्रभेदाद्भेद इति भावः।

अस्त्वेकशास्त्रत्वं तत्र कथं पौर्वापर्यनियम इति शङ्कां परिहरन् वृत्तिग्रन्थस्थं संहितपदं विवृणोति–**मीमांसाशास्त्रमिति**। पूर्वोत्तररूपभागद्वयघटितमित्यर्थः। **विशिष्टक्रमम्**। क्रमविशेषवत्। **प्रथममिति**। प्राथम्यं च शास्त्रान्तरश्रवणयोग्यावस्थापेक्षया पूर्वभावित्वम्। गर्भाष्टमोपनीतस्य ह्यध्ययनम्। ततः पूर्वं शास्त्रान्तरपरिश्रमानर्हत्वात्। अध्ययनविधिपरतन्त्रस्य साङ्गाध्ययनानन्तरं कर्मविचारावश्यम्भावस्य स्वरससिद्धत्वाच्च। एतेन साधनचतुष्टयादिपूर्ववृत्तान्तरनिष्पादनस्यानवसरग्रस्तत्वं सूचितम्। **अध्ययनेनैवेति**। एवशब्देन नियमविधित्वं द्योतितम्। न तु पुस्तकनिरीक्षणादिनेत्यर्थः।

यते । तच्च अध्ययनं किंरूपं कथञ्च कर्तव्यमित्यपेक्षायाम्, अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयेदित्यनेन,—

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥

इत्यादिव्रतनियमविशेषोपदेशैश्च अपेक्षितानि विधीयन्ते । एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते । अध्ययनञ्च स्वाध्यायसंस्कारः, स्वाध्यायोऽध्येतव्य—इति स्वाध्यायस्य

---

**तत्** । स्वाध्यायोध्येतव्य इति वाक्यप्रतिपादितम् । **किं रूपम्** । स्वतन्त्रोच्चारणरूपं परतंत्रोच्चारणरूपं वा, सकृदुच्चारणरूपमसकृदुच्चारणरूपं वेत्यर्थः । **कथम्** । किमङ्गकम् । उपनयनस्याध्ययनाङ्गत्वं दर्शयति—**अष्टवर्षमिति । इत्यादीति** । आदिशब्देन ' अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानिच सर्वाणि कृष्णपक्षेषु संपठेत् ' इत्यादिवचनानां संग्रहः । **व्रतम्** । उपाकर्मकाण्डव्रतादि । **नियमः** । देशकालभक्ष्याभक्ष्यादिव्यवस्थारूपः । फलितमाह—**एवमिति** । सत्कुलप्रसूतः सदाचारसंपन्नः आत्मगुणैरक्रोधादिभिर्युक्तः वेदविच्च य आचार्यस्तेनोपनीतस्य पूर्वोक्त व्रतनियमविशेषयुक्तस्य माणवकस्य आचार्यकर्तृकोच्चारणानन्तरभाव्युच्चारणरूपम् अक्षरराशिग्रहणं फलं यस्यैवंभूतमध्ययनमित्यर्थः । आचार्योच्चारणानूच्चारणमित्यनेन परतन्त्रोच्चारणरूपता दर्शिता । अक्षरराशिग्रहणफलमित्यनेनासकृदावृत्तिरूपता दर्शिता । यथा 'व्रीहीनवहन्ति' इत्यत्रावहननस्य वैतुष्यपर्यन्तत्वादश्रुताप्यावृत्तिः सिध्यति तद्वदत्रापि । अनेन द्विविधाऽपि किंरूपमित्याकाङ्क्षा शमिता । वेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्येत्यनेनच कथमित्याकाङ्क्षा पूरिता । नन्वध्ययनस्य पुरुषसंस्कारत्वेनापूर्वसिध्यर्थतया स्वाध्यायसिध्यर्थत्वाभावादक्षरराशिग्रहणफलकत्वाभावेनावृत्यासिद्धिरत आह—**अध्ययनं चेति । स्वाध्यायसंस्कारः** । नतु पुरुषसंस्कारः ।

कर्मत्वावगमात् । संस्कारो हि नाम, कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वञ्च स्वाध्यायस्य युक्तं, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनाववोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च । एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति । अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थाववोधित्वदर्शनात्, गृहीतात् स्वाध्यायादवगम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा, तत्स्वरूपप्रकारविशेषनिर्णय-

---

**कर्मत्वेति**। यद्यपि यद्यत्कर्म तत्तत्संस्कार्यमेवेति न नियमः। उत्पाद्यसंस्कार्यप्राप्यभेदेन कर्मणस्त्रिविधत्वात् । ओदनं पचतीत्याद्यम् । तण्डुलं पचतीति द्वितीयम् । स्थाणुं पश्यतीति तृतीयम् । तथाप्यत्र स्वाध्यायरूपकर्मण उत्पाद्यत्वासम्भवः । न ह्यध्ययनेन वेदराशिरुत्पाद्यते । फलान्तरे सम्भवति प्राप्यत्वमात्रपर्यवसानं चायुक्तम् । अतोऽत्र स्वाध्यायस्य संस्कार्यकर्मत्वमेवेति भावः। **नामेति**। प्रसिद्धौ । **अवबोधित्वात्**। अनुष्ठानौपयिकबोधजनकत्वात् । **स्वरूपेणापि** । अर्थज्ञानतदनुष्ठानविरहेणापि । यतः स्वाध्यायस्य स्वरूपतोऽपि धर्मादिसाधनत्वमतोऽध्ययनविधेरर्थज्ञानपर्यन्तं तात्पर्यकल्पने मानाभाव इत्याह–**एवमिति**। **मन्त्रवदिति** । यथा 'शंनो मित्रः' इत्यादिमंत्राणामर्थाऽज्ञानेपि केवलजपमात्रेणोपकारकत्वम्, यथा च काण्डव्रतादिनियमेषु तदङ्गभूतमंत्राणां केवलपाठेनोपकारकत्वम्, नहि बालानां मंत्रार्थाववोधसम्भवस्तद्वदितिभावः । **पर्यवस्यतीति** । स्वाध्यायशब्दश्च नार्थज्ञानवाची अपि तु स्वशाखामात्रवाचीति स्वाध्यायशब्दात्स्वरसतस्तथैव प्रतीतेः। तर्हि कथं स्वाध्यायस्यानुष्ठानौपयिकबोधजनकत्वं किमर्थं च मीमांसाया आरम्भणीयत्वमित्यत आह–**अध्ययनेति । स्वभावतः**। शब्दस्य बोधकत्वशक्तिस्वाभाव्यात् । व्युत्पन्नपदपदार्थं प्रति शब्दस्यार्थाववोधकत्वं स्वाभाविकमिति प्रसिद्धम् । एवकारो विधिनैरपेक्ष्यपरः । **प्रयोजनेति**। अनेनाध्ययनविधेः परम्परया पुरुषार्थपर्यवसायित्वमुक्तम्। साक्षात्प्रयोजनं तु अक्षरराशिग्रहणमेव । मीमांसारम्भे हेतुमाह–**गृहीतादिति**। गृहीतमात्रादित्यर्थः। स्वस्यार्थस्य प्रयोजनं पुरुषार्थरूपं तद्विशिष्टार्थस्यापाततो ज्ञाने सत्यापातप्रतीतेः संशयविपर्ययसहत्वात्तन्निराकरणाय मीमांसेति भावः । **स्वरूपविशेषाः** अङ्गिनः। **प्रकारविशेषाः** अङ्गानि। पूर्वपक्षोक्तस्वरूपप्रकारापेक्षया सिद्धान्त्युक्तस्वरूपप्रकारयोर्वैषम्यं विशेषशब्देन विवक्षितम् । प्रयोजनवदर्थ- स्वाध्याय वेद-मीमांसाशब्दाः पूर्वो-

फलवेदवाक्यविचाररूपमीमांसाश्रवणे अधीतवेदः पुरुषः स्वयमेव प्रवर्तते । तत्र कर्मविधिस्वरूपे निरूपिते, कर्मणामल्पास्थिरफलत्वं दृष्ट्वा, अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु च अमृतस्वरूपानन्तस्थिरफलापातप्रतीतेः तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति । तथाच, वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं, ब्रह्मज्ञानस्य च अक्षयफलत्वं दर्शयन्ति । 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते,' 'अन्तवदेवास्य तद्भवति' (बृ. ३।८।१०) 'नह्यध्रुवैः प्राप्यते ध्रुवं कर्मभिः' ( का. २।१० ) 'प्लवा ह्येते अदृढा यज्ञरूपाः' (मुं. २।७) 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् । नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं,

---

त्तरभागसाधारणाः । **स्वयमेव** । न तु विधिना । पुरुषस्य चेतनत्वात्प्रयोजनवदर्थापातप्रतीतेश्च तन्निर्णयेच्छाजनकत्वादिति भावः ।

एकशास्त्रत्वं रागतः प्रवृत्तिश्चास्तु तत्र कथं पौर्वापर्यनियमस्तत्राह–**तत्रेति** । तत्र वेदे । कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमिति भावः । **अध्ययनेति** । अध्ययनस्य कृत्स्नस्वाध्यायविषयत्वादुपनिषदश्च स्वाध्यायशब्दान्तर्गतत्वादिति भावः । तन्निर्णयः फलं यस्येति विचारविशेषणम् । **अधिकरोति** । अधिकारी भवति । एवं च कर्मविचारकृत्वमेवाधिकारप्रयोजकं न तु साधनचतुष्टयसंपन्नत्वमित्यभिप्रायः । शारीरकमीमांसारम्भणीयत्वप्रयोजकापातप्रतीतिजनकवेदान्तवाक्यान्याह-**तथा चेति** । केवलशब्देन ज्ञानाङ्गकर्मव्यावृत्तिः । **तद्यथेहेति** । ननु पूर्वं कर्मविचारेण कर्मफलक्षयिष्णुत्वस्य निर्णयादिह पुनः किमर्थं तत्प्रतिपादकानि 'तद्यथेह' इत्यादीनि वाक्यान्युदाह्रियन्ते इति चेन्न । अधिगतकर्मणः पुरुषस्य निर्णीतार्थसंवादिवाक्यदर्शनात्कर्मफलास्थिरत्वस्येव ब्रह्मज्ञानफलाक्षय्यत्वस्य प्रामाणिकत्वं सम्भवतीति श्रद्धास्थिरीकरणार्थं दृष्टान्तत्वेन तदुपन्यासात् । **कर्मचितः** । कर्मणा सम्पादितः । **लोकः** । लोक्यते इति लोकः फलम् । **तत्** । ज्ञानरहितं कर्म । **अध्रुवैः** अस्थिरैः । **ध्रुवं** स्थिरं मोक्षादि । **प्लवाः** । विनाशिनः । **अदृढाः** । अस्थिराः । यज्ञादिकर्माणि संसारपारं तारयितुमसमर्थानीति भावः । **परीक्ष्य** । मीमांसान्यायैर्निरूप्य । **ब्राह्मणः** । अधीतसाङ्गसशिरस्कवेदः । **अकृतः** । नित्यः परमात्मा कृतेन कर्मणा न लभ्यते । **गुरुमेवेति** । एवकारेण गुरूपसदननियमो गम्यते । **समित्पाणिः** । न रिक्तपाणिः । **श्रोत्रियं** श्रुतवेदान्तम् । **ब्रह्मनिष्ठं** । ब्रह्मसा-

तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय, येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' (मुं. १।२।१२-१३) 'ब्रह्मविदाप्नोति परम्' (तै. २।१।१) 'न पुनर्मृत्यवे, तदेकं पश्यति,' 'न पश्यो मृत्युं पश्यति' (छां० ७।२६।२) 'स स्वराड्भवति' (छा. ७।२५।२) 'तमेवं विद्वानमृत इह भवति' (नृ. पू. उ.६) 'तमेव विदित्वातिमृत्युमेति, नान्यः पन्था अयनाय विद्यते' (श्वे. ३।८) पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे. १।६) इत्यादीनि।

ननु च, साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं, स्वर्गादीनाञ्च क्षयित्वं, ब्रह्मोपासनस्य अमृतफलत्वञ्च ज्ञायते एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्, किमर्था धर्मविचारापेक्षा। एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गवेदाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्। आपाततः प्रतीतिर्विद्यते एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चा-

---

क्षात्कारवन्तं गुरुमभिगच्छेदेवेत्यन्वयः। **उपसन्नाय**। प्राप्ताय। **शमान्विताय**। बाह्येन्द्रियनियमयुक्ताय। एतेन श्रवणोपयुक्तमवधानं विवक्ष्यते, न तूपासनोपयुक्तमत्यन्तेन्द्रियजयादि। **येन**। विज्ञानेन। **अक्षरं**। स्वरूपेणाविकारम्। अनेन जडव्यावृत्तिः। **सत्यं** गुणद्वाराप्यविकारम्। अनेन जीवव्यावृत्तिः। **प्रोवाच** प्रब्रूयात्। **मृत्युः** प्रमादो मोहोवा। यथावस्थितात्मस्वरूपाज्ञानं प्रमादः। भ्रान्तिज्ञानं मोहः। **पश्यः**। ब्रह्मदर्शी। **स्वराट्** स्वतन्त्रः। कर्मवश्यो न भवतीत्यर्थः। **अयनाय** मोक्षाय। **पृथगिति**। पृथक्शब्देन तदुपासनरूपज्ञानं नात्मैक्यविषयमपि तु पृथक्त्वविषयमिति दर्शितम्। **तेन** परमात्मना। **जुष्टः** प्रीतिविषयीकृतः। **इत्यादीनि**। अस्य 'वेदान्तवाक्यानि' इति पूर्वेणान्वयः।

एकशास्त्रत्वप्रयोजकीभूतं पूर्वमीमांसाप्रतिपादितसाध्यधर्मविचारस्य ब्रह्मविचारापेक्षया पूर्वत्वमसहमानः पृच्छति—**ननु चेति**। **ब्रह्मजिज्ञासायाम्**। मीमांसोत्तरभागप्रतिपादितायाम्। **धर्मविचारः**। मीमांसापूर्वभागप्रतिपादितः साध्यधर्मविचारः। परिहरति—**एवं तर्हीति**। उदाहृतवाक्यमात्रतृप्तोसि चेदित्यर्थः। **कृत्स्नस्येति**। ब्रह्मणोपीति भावः। पुनः पृच्छति·**सत्यमिति**। अर्धाङ्गीकारे एतदव्ययम्। **आपाततःप्रतीति**रज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहं ज्ञानम्। विपर्ययो मिथ्याज्ञानम्। **न्यायानुगृहीतस्येति**। अन्यथा 'तान्येवानुविनश्यति' (बृ. २।४।१२) 'असद्वा इदम-

यकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते । अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य–इति चेत्, तथैव धर्मविचारोऽपि कर्तव्य–इति पश्यतु भवान् ।

ननु च, ब्रह्मजिज्ञासा यदेव नियमेन अपेक्षते, तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः । अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः । कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते । तदनधिगतकर्मणो न शक्यं कर्तुमिति चेत् । अनभिज्ञोहि भवान् शारीरकशास्त्रविज्ञानस्य । अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूल-

---

ग्रआसीत् ' ( तै. २।७।१ ) इत्यादिश्रुतिष्वात्माऽनित्यत्वादिप्रतीतिर्दुष्परिहरा स्यात् **नातिवर्तते** । नातिक्रामति । परिहरति–**तथैवेति** । अत्रापि न्यायानुग्रहाभावे ' अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ' इत्यादिश्रुतिषु कर्मफलस्थिरत्वप्रतीतिर्दुष्परिहरेति भावः ।

एवं फलद्वारा हानाय कर्मज्ञानापेक्षा दर्शिता । अथ ' स्वरूपेणोपादानाय च नियमेन कर्मज्ञानापेक्षास्ति ' इति स्वमतं पूर्वोत्तरपक्षद्वारा दृढीकर्तुं ' मुमुक्षोःकर्मणो नियमेनानपेक्षा ' इति लघुपूर्वपक्षमुद्घाटयति–**ननु चेत्यादिना साधनचतुष्टयं पूर्ववृत्तमितिवक्तव्यमित्यन्तेन । अधीतेति ।** वेदान्तवाक्याध्ययनेन तत्रैवापातप्रतीतिर्बुभुत्सा च भवतीति भावः । एवं च हानाय कर्मज्ञानापेक्षा नास्तीति सिद्धम् । अथोपादानार्थमपि न कर्मापेक्षेत्युपपादयितुं वेदान्तमात्रबुभुत्सोरपि कर्मविचारापेक्षां शङ्कते- **कर्माङ्गाश्रयाणीति** । कर्माङ्गभूतोद्गीथादिविषयाणीत्यर्थः । एकस्य साम्नः पञ्च- भागाः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः । तत्र द्वितीय उद्गीथः प्रणवपूर्वं गीयते । तादृशोद्गीथावयवप्रणवोपासनम् ' ओमित्येतदक्षरमुद्गीथमुपासीत ' ( छां. १।१।१ ) इति श्रुतौ विधीयते । अनधिगते कर्मणि उद्गीथादिविषयोपासनचिन्ताया अशक्यत्वात्कर्मविचारोपेक्षित इति भावः । **अत्रैव** । शारीरकमीमांसायामेव ( अ. ३ पा.३ सू. ५३ ) । पूर्वपक्षीपरिहरति–**अनभिज्ञ इति** । अस्मिन्शास्त्रे प्रधानतया प्रतिपाद्यं ज्ञानमिति त्वया न ज्ञातमित्यर्थः । **विविधः** । अवान्तरभेदबहुलः । **भेदः** । ज्ञातृज्ञेयज्ञानरूपः । **मरणादीति** । आदिशब्देन नरकगर्भवासादिग्रहणम् । संसारः प्रकृति-

भूतमिथ्याज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बिकर्मज्ञानं क्वोपयुज्यते, प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानस्वरूपत्वाविशेषादिहैव क्रियते। स तु न साक्षात् सङ्गतः। अतो यत्प्रधानं शास्त्रं, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम्।

बाढं, तदपेक्षितञ्च कर्मविज्ञानमेव। कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र. सू. ३।४।२६) इति। अपेक्षिते च कर्मण्यज्ञाते, केन समुच्चयः केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्।

नैतत् युक्तं, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेव अविद्यानिवृत्तेः। अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेतिकर्त-

---

संबन्धः तत्प्रभवं सांसारिकम्। **मिथ्याज्ञानं** भेददर्शनरूपभ्रान्तिज्ञानम्। तस्य **निबर्हणं** नाशः। **आत्मैकत्वविज्ञानमिति**। सर्पभ्रमस्य हि रज्जुयाथात्म्यज्ञानं निवर्तकं न तु कर्मविशेषः। एवं भेददर्शनस्याविद्याकृतत्वादैक्यज्ञानमेव तन्निवर्तकमिति तत्रैव तात्पर्यं वेदान्तवाक्यानामित्यर्थः। **क्वोप युज्यते**। न कुत्रचित्। ज्ञानस्वरूपोत्पत्तौ तत्फलोत्पत्तौ ज्ञानोत्पत्तिसाधनानुग्रहे वा नोपयुज्यत इत्यर्थः। **ज्ञानस्वरूपत्वाविशेषादिति**। ज्ञानस्वरूपत्वसाम्याद्बुद्धिस्थतया कृतः, न तु प्रधानार्थोपयोगित्वादिति भावः। यत् प्रधानं यस्मिन्निति बहुव्रीहिः। **तदपेक्षितमेव**। तेन प्रधानार्थेनापेक्षितं साधनचतुष्टयमेव। नत्वन्यत्कर्मज्ञानादीत्यर्थः।

अत्र ज्ञानकर्मसमुच्चयवादिनः प्रत्यवतिष्ठन्ते—**बाढमिति**। समुच्चयेऽपिनोभयोः समप्राधान्यं किं तु ज्ञानमेव प्रधानं कर्म तु तदङ्गमिति केचित्। अन्ये तु समप्राधान्यमिच्छन्ति। **सर्वापेक्षेति**। विद्या अग्निहोत्रादिसर्वकर्मापेक्षैव। 'ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' (बृ. ४।४।२२) इत्यादिश्रुतेः। यथा पुरुषगमनसाधनभूतोऽश्वः परिकरबन्धादिकर्मापेक्षस्तद्वदिति तत्सूत्रार्थः। **अपेक्षिते चेति**। नित्यनैमित्तिकयोः समुच्चयो न तु काम्यनिषिद्धयोरिति विभागः कर्माज्ञाने ज्ञातुं न शक्यत इत्यर्थः।

पूर्वपक्षी परिहरति—**नैतदिति। सकलविशेषाः**। सजातीयविजातीयस्वगतभेदरूपाः। तेषां प्रत्यनीकं सर्पाद्याकाराणां रज्जुत्वमिव तेषां निवर्तकम्। **चिन्मात्रं** ज्ञानरूपम्। मात्रशब्देन ज्ञातृत्वज्ञेयत्वव्यावृत्तिः। एवकारेण कर्मव्यावृत्तिः। **अविद्यानिवृत्तिरेव,** न ब्रह्मप्राप्तिः। तस्य सिद्धत्वात्। **वर्णेति**। वर्णविशेषा ब्राह्मणादयः। आश्रमविशेषा

व्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्। श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं, ज्ञानस्यैव मोक्षसाधनत्वञ्च दर्शयन्ति। 'अन्तवदेवास्य तद्भवति' (बृ.३।८।१०) 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' 'ब्रह्मविदाप्नोति परम्' (तै. २।१।१) 'ब्रह्मविद् ब्रह्मैव भवति' 'तमेव विदित्वातिमृत्युमेति' (श्वे. ३।८) इत्याद्याः।

यद्यपि चेदमुक्तं, यज्ञादिकर्मापेक्षा विद्येति। तद्वस्तुविरोधात्, श्रुत्यक्षरपर्यालोचनया च अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते, न फलोत्पत्तौ। विविदिषन्तीतिश्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेव अन्तरङ्गोपायतां श्रुतिरेवाह। 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' (बृ. ४।४।२३) इति। तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्यां 'सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्' (छां. ६।२।१)

---

ब्रह्मचर्यादयः। साध्यं स्वर्गादि। साधनं यागादि। इतिकर्तव्यता प्रयाजाद्यङ्गजातम्। आदिशब्देन निषिद्धानि प्रायश्चित्तानि च कर्माणि संगृह्यन्ते। एतादृशा अनन्ता ये विकल्पा भेदास्तदास्पदमित्यर्थः।

**वस्तुविरोधादिति**। कर्मणोनन्तभेदास्पदत्वेनानित्यफलदत्वेन च विद्यया सह विरोधादित्यर्थः। **श्रुत्यक्षरपर्यालोचना**। विविदिषन्तीतिक्रियापदस्थसन्प्रत्ययार्थनिरूपणम्। **न फलोत्पत्तौ**। न मोक्षोत्पत्तौ। श्रुतौ हि (बृ० ४।४।२२) यज्ञसाध्यत्वं विविदिषाया एवोक्तं न तु मोक्षस्येति भावः। **शमादीनामेवेति**। अनेन ज्ञानोत्पत्तावपि न कर्मापेक्षेति ध्वन्यते। शमादीनामिन्द्रियव्यापारोपरतिरूपत्वेन यज्ञादिकर्मणश्च तत्प्रवृत्तिरूपत्वेनान्योन्यविरोधित्वात्। **शान्त इति**। शमः मनोनिग्रहः, दमः बाह्येन्द्रियनिग्रहः, उपरतिः संन्यासः, तितिक्षा क्षमा, समाधानं चित्तैकाग्रता एतद्युक्तः आत्मनि जीवात्मनि तदभेदेन परमात्मानं पश्येदित्यर्थः। **जन्मान्तरेति**। जन्मान्तरशतानुष्ठितं फलविशेषाभिसन्धिरहितं यत्कर्म तेन मृदितकषायस्य नष्टपापस्य विविदिषा जायते। स्वर्गादिसाधनस्य कर्मणो विविदिषासाधनत्वानुपपत्तिपरिहारायानभिसंहितफलशब्दः। विविदिषारूपफलाभिसन्धिसत्वाद्विशेषेत्युक्तम्। **सदेवेति**। अनेन 'का-

'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै. २।१।१ ) 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' ( श्वे. ६।१९ ) 'अयमात्मा ब्रह्म' ( बृ. २।५।१९ ) 'तत्त्वमसि' ( छां. ६।८।७ ) इत्यादिवाक्यजन्यज्ञानादेव अविद्या निवर्तते ।

वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम, वेदान्तवाक्यान्यात्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनाय अस्यार्थस्य अनवरतभावना निदिध्यासनम् । एवं श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्य अवश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम् । तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्रफलोपभोगविरागः, मुमुक्षुत्वञ्चेत्येतत्साधनचतुष्टयम् । अनेन विना जिज्ञासानुपपत्तेरर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते । एतदुक्तं भवति, ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् । बन्धश्च अपारमार्थिकः । स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निव-

---

रणं नास्त्येव' इत्यज्ञानं निवर्तते । **सत्यमिति** । अनेन 'शून्यस्य कारणत्वम्' इत्यज्ञानं निवर्तते । **निष्कलं** निरवयवम् । **निष्क्रियं** क्रियारहितम् । **शान्तम्** । अशनायापिपासाशोकमोहजरामृत्युरूपोर्मिषट्करहितम् । **निरवद्यम्** अनिन्द्यम् । **निरञ्जनं** कर्मतत्फलसम्बन्धरहितम् । अनेन सत्यज्ञानादिवाक्यफलितव्यावृत्तिर्विशदी क्रियते । **अयमात्मा ब्रह्म तत्त्वमसीति** । अनेन जीवब्रह्मभेदरूपाज्ञाननिवृत्तिः ।

तर्हि किमर्थं श्रवणादिविधानमित्याशङ्क्याह—**वाक्यार्थेति** । वाक्यार्थज्ञानोत्पत्तिविरोधिनिरसनोपयोगीनीत्यर्थः । **प्रतिपादकानि** । निष्पादनक्षमाणि । **एतद्विरोधिनी** । आत्मैकत्वविद्याविरोधिनी । **इहामुत्रेति** । ऐहिकामुष्मिकफलभोगवैतृष्ण्यमित्यर्थः । **अर्थस्वभावादेव** । अर्थशब्देन साधनचतुष्टयज्ञानकर्मणां ग्रहणम् । एष हि तेषां स्वभावः । नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलोपभोगविरागे नित्यपुरुषार्थेच्छायां च सत्यां श्रवणादौ प्रवृत्तिरवश्यं भवति । शमादीनां च मनोऽवधानहेतुत्वेन तदुपयोगित्वं निवृत्तिरूपत्वेन च प्रवृत्तिरूपकर्मविरोधित्वम् । ज्ञानस्य कर्मनिरपेक्षोपायत्वम् । कर्मणश्च भेदावलम्बित्वेन तद्विरुद्धत्वमितिबोध्यम् । **इदमेव** । साधनचतुष्टयमेव । **बन्धः** । संसारबन्धः । **ज्ञानेनैव** । न तु कर्मणा । एतेन समुच्चयवादो निरस्तः ।

र्त्यते । निवर्तकश्च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् । तस्यैतस्य वाक्यजन्यज्ञानस्य स्वरूपे तदुत्पत्तौ कार्ये वा कर्मणो नोपयोगः । विविदिषायामेव तु कर्मणामुपयोगः । स च पापमूलरजस्तमोनिबर्हण द्वारेण सत्त्वशुध्द्या भवतीति--इममुपयोगमभिप्रेत्य 'ब्राह्मणा विविदिषन्ति' (बृ. ४।४।२२) इत्युक्तमिति । अतः कर्मणो ज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ।

अत्रोच्यते । यदुक्तम् , अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवतीति । तदभ्युपगम्यते । अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् । किं वाक्याद्वाक्यार्थज्ञानमात्रम् , उत तन्मूलमुपासनात्मकं ज्ञानमिति । न तावद्वाक्यजन्यं ज्ञानं, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च । न च वाच्यं, भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति । ज्ञाने जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय । चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत् , अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति ।

---

ज्ञानं प्रत्यपि कर्मणो न साधनत्वमित्याह—**निवर्तकमिति** । **तस्य** । कर्मानिरपेक्षस्य । अतएवेदृशज्ञानस्वरूपे कर्मणो नोपयोगः । समुच्चयवादे तु कर्मसहितज्ञानस्य मोक्षहेतुत्वेन तादृशज्ञानस्वरूपस्य कर्मघटितत्वात्तस्योपयोगः । **एतस्य** । अद्वैतविषयस्य । **तदुत्पत्तौ** । तादृशज्ञानोत्पत्तौ । **कार्ये** । मोक्षे । **अनुपयोगात्** । हानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वात् ।

लघुसिद्धान्तमारभते—**अत्रोच्यत इति** । **वेदान्तवाक्यैः** । 'प्रज्ञां कुर्वीत' इत्यादिविधिवाक्यैः । **वाक्यात्** । 'तत्त्वमसि' ( छां. ६।८।७ ) इत्यादिवाक्यात् । **विधानमन्तरेणापीति** । प्रमाणज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रमिति न तद्विधेयमिति भावः । **न चेति** । वाक्यादविद्यानिवर्तकज्ञानोत्पत्तौ भेदवासना प्रतिबन्धिकेत्याशयः । **वाक्यं** कर्तृ । 'सनकादीनां ज्ञानित्वेन प्रसिद्धत्वाद्भेदवासनायाः प्रतिबन्धकत्वं नास्ति' इति चेत्तत्राह—**जातेपीति** । उत्पन्नेपि ज्ञाने इत्यर्थः । **सर्वस्येति** । ज्ञानोत्पत्तावपि भेदज्ञाननिवृत्तिः केषांचिदेव भवति न तु सर्वस्येत्यर्थः । 'ज्ञानोत्पत्तौ सत्यां भेदज्ञानं न निवर्तते' इत्यत्र दृष्टान्तमाह—**चन्द्रैकत्व इति** । अनिवृत्तं चेद्भेदज्ञानं बन्धकं स्यादित्यत आह—**अनिवृत्तमपीति** । **छिन्नमूलत्वेन** । छिन्नमविद्याख्यमूलं यस्य

सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः । सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् । सत्यपि वाक्यार्थज्ञाने अनादिवासनया भेदज्ञानमनुवर्तत—इति भवता न शक्यते वक्तुम् । भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः । वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ च अनुवर्तत—इति बालिशभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेन अविनष्टत्वात् मिथ्याज्ञानानुवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादिकार्यंतु निवर्तते । अपि च, भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति । भेदवासनाया अनादिकालोपचितत्वेन अपरिमितत्वात्, तद्विरोधिभावनायाश्च अल्पत्वादनया तन्निरसनानुपपत्तेः । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यै-

---

भेदज्ञानस्य तत्त्वेनेत्यर्थः । यथा कुलालभ्रमितं चक्रं भ्रमयितृव्यापारोपरमेऽपि पूर्ववेगवशात्किंचित्कालं स्वयमेव भ्रमेत् क्रमेण चोपरमेत तद्वत् । इतिशब्दः शङ्कासमाप्तिद्योतकः । प्रथमं ज्ञानानुत्पत्तिं दूषयति—**सत्यामिति** । भेदवासना प्रतिबन्धिकेति चेत्तत्राह—**सत्यामपीति** । निवर्त्याया भेदवासनायाः निवर्तकज्ञानोत्पत्तिप्रतिबन्धकत्वं न सम्भवतीत्यर्थः। आप्तोपदेशःशाब्दज्ञानहेतुः । लिङ्गं चानुमानहेतुः । आदिना प्रत्यक्षप्रमाणसंग्रहः । जातेपीत्याद्युक्तं निरस्यति । **सत्यपीति । भवता** । ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्ववादिना । **भेदेति** । वासनाया अपि मिथ्यात्वाविशेषात्तस्या अपि ज्ञानेन निवर्त्यत्वमवश्याश्रवणीयमिति भावः। **वासनेति** । 'वासनायाःकार्यं भेदज्ञानं छिन्नाविद्याख्यमूलमनुवर्तते' इति मूर्खोक्तिः । 'छिन्नमूलम्' 'अनुवर्तते' इत्युक्तेर्व्याहतत्वात् । अकारणकार्योत्पत्तिस्वीकारे तु मुक्तिरपि ज्ञाननिरपेक्षा स्यात् । श्रवणादिभिर्विना वाक्यार्थज्ञानं स्यात् । अविद्यया विना जगद्भ्रमश्च स्यात् । अधिष्ठानेन विनाऽविद्यापि कार्यकरी स्यादितिभावः । **बाधकः** । एकश्चन्द्र इत्याप्तोपदेशः । **तिमिरो** नेत्ररोगः । **प्रबलेति** । ऐन्द्रजालिकभ्रमादिषु वस्तुतो भ्रमत्वेपि भ्रमहेतोः प्राबल्याद्सत्यविषयत्वनिश्चयप्रतिबन्धः स्यादिति तद्व्यावृत्त्यर्थं प्रबलप्रमाणशब्दः । **भयादीति** । रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वे-

विधित्सितम् । तथा च श्रुतयः, ' विज्ञाय प्रज्ञां कुर्वीत ' ( बृ. ४।४।२१ ) ' अनुविद्य विजानाति ' ( छां. ८।७।१ ) ' ओमित्येवात्मानं ध्यायत ' ( मुं. २।२।६ ) ' निचाय्य तन्मृत्युमुखात्प्रमुच्यते ' ( का. ३।१५ ) ' आत्मानमेव लोकमुपासीत ' ( बृ. १।४।१५ ) ' आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' ( बृ. २।४।५ ) ' सोऽन्वेष्टव्यः । स विजिज्ञासितव्यः ' ( छां. ८।७।१ ) इत्येवमाद्याः । अत्र निदिध्यासितव्य–इत्यादिनैकार्थ्यात् अनुविद्य विजानाति, विज्ञाय प्रज्ञां कुर्वीत–इत्येवमादिभिर्वाक्यार्थज्ञानं ध्यानोपकारकत्वात् अनुविद्य विज्ञायेत्यनूद्य, प्रज्ञां कुर्वीत विजानातीति ध्यानं विधीयते । श्रोतव्य–इति चानुवादः । स्वाध्यायस्यार्थपरत्वेन अधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत –इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य, मन्तव्य–इति चानुवादः । तस्माद्ध्यानमेव विधीयते । वक्ष्यति च, ' आवृत्तिरसकृदुपदेशात् ' ( ब्र. सू. ४।१।१ ) इति ।

---

नोक्ता । आदिना पलायनम् । **विज्ञायेति** । आत्मानं विज्ञाय ज्ञात्वा प्रज्ञां ध्यानं कुर्वीतेत्यर्थः । **अनुविद्य** । ज्ञात्वा । **विजानाति** । विजानीयात् ध्येयादिति यावत् । **निचाय्येति** । अनेन ज्ञानस्य प्रत्यक्षसमानाकारता दर्शिता । चायृ दर्शने इति हि धातुः । एतेन केवलवाक्यार्थज्ञानस्य मोक्षसाधनत्वं नास्ति किं तु साक्षात्कारप्रयोजकीभूतध्यानस्येति सूचितम् । **निदिध्यासितव्य इति** । सन्प्रत्ययार्थेच्छाया अविधेयत्वात्तत्कर्मीभूतध्यानस्यैव विधेयत्वं बोध्यम् । एवं विजिज्ञासितव्य इत्यत्रापि । ननु प्रज्ञाविजानातिशब्दयोर्ज्ञानसामान्यवाचित्वात्कथं तद्विशेषस्य ध्यानस्य विधानमत आह–**अत्रेति । ऐकार्थ्यम्** । एकार्थप्रतिपादकत्वम् । ननु श्रोतव्य इत्यनेन मन्तव्य इत्यनेन वैकार्थ्यात्प्रज्ञाविजानातिशब्दयोः श्रवणपरत्वं मननपरत्वं वाऽस्त्वित्याशङ्क्याद्ये आह–**श्रोतव्य इति । अर्थपरत्वेन** । अर्थप्रतिपादकत्वेन । **प्रयोजनेति** । स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनादित्यर्थः । अन्त्ये आह–**श्रवणप्रतिष्ठार्थत्वादिति** । आचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनमेवमननमिति भावः । **आवृत्तिरिति** । वेदान्तेषु मोक्षसाधनतया विहितं वेदनमसकृदावृत्तिरूपम् । उपासनारूपमिति यावत् । श्रुतौ विद्युपास्त्योरेकार्थत्वेनोपदेशादिति सूत्रार्थः ।

तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते । विद्युपास्त्योरव्यतिरेकेण उपक्रमोपसंहारदर्शनात् । 'मनो ब्रह्मेत्युपासीत' (छां. ३।१८।१) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छां. ३।१८।३)। 'न स वेद। अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत' (बृ. १।४।७)। 'यस्तद्वेद, यत् स वेद, स मयैतदुक्तः' (छां. ४।१।४)–इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' (छां.४।२।२) इति। ध्यानञ्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्। 'ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा,–

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मुं. २।२।८)

---

तमेवाह–**तदिदमिति । अव्यतिरेकेण ।** अभेदेन । **मनोब्रह्मेति ।** अत्रोपासीतेत्युपास्तिनोपक्रम्य य एवं वेदेति विदिनोपसंहृतम् । वितरणजन्या कीर्तिः विक्रमजन्यं यश इति कीर्तियशसोर्भेदः। **ब्रह्मवर्चसं** ब्रह्मतेजः। **न स इति ।** योन्यां देवतामुपास्ते सः न वेद हि यतः एषः अकृत्स्नः अकृत्स्नविन्। किन्त्वात्मेत्येवोपासीतेत्यर्थः। अत्रोपक्रमोपसंहारयोरुपासनशब्दः मध्ये वेदनशब्दः। **यस्तदिति ।** अत्र वेदेति विदिनोपक्रम्योपास्स इत्युपास्तिनोपसंहारः कृतः। तत् ब्रह्म यः रैक्वः वेद, सः रैक्वः यत् ब्रह्म वेद, एतदुभयं सः रैक्वः एतद् ब्रह्म चेत्येवंलक्षणं तव मयोक्तमित्यर्थः। **अनुम इति ।** हे भगवः हे भगवन् त्वं यां देवतामुपास्से एतां देवतां मे अनुशाधि विविच्य ज्ञापयेत्यर्थः। **अविच्छिन्नेति ।** अविच्छिन्नत्वं विजातीयप्रत्ययान्तराव्यवहितत्वम्। ध्रुवस्मृतेरविच्छिन्नस्मृतिसन्तानमेव स्वरूपम्। सा ध्रुवा स्मृतिरेव ध्यानमित्यर्थः। **समानाकारेति ।** वक्ष्यमाणरीत्या अपरोक्षत्वेनेति भावः। **भिद्यते इति ।** हृदयस्य मनसो रागादिग्रन्थिः। यद्वा हृदयस्य तत्स्थजीवस्य ग्रन्थिः प्रकृतिसंबन्धः। हृदयं शरीरं तद्रूपो ग्रन्थिरिति वा । संशयशब्देन देहात्माभिमानादिर्विपर्ययोप्युपलक्षणीयः। **कर्माणि ।** पुण्यपापरूपाणि। परंचावरं च तस्मिन्ब्रह्मणि इत्यर्थः। अस्मिन्वचने ग्रन्थिभेदहेतुत्वेन ब्रह्मदर्शनमुक्तम्। पूर्वत्र तु स्मृतिरुक्तेत्यनयोरेकवाक्यत्वं न स्यात्।

इत्यनेनैकार्थ्यात् । एवञ्च सति आत्मा वारे द्रष्टव्य–इत्यनेन **निदिध्या**सनस्य दर्शनरूपता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षात् दर्शनरूपता । वाक्यकारेणैतत्सर्वं प्रपञ्चितम् । वेदनमुपासनं स्यात् तद्विषये श्रवणादिति । सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवदिति पूर्वपक्षं कृत्वा, सिध्दन्तूपासनशब्दादिति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । ' उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च ' इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ।

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः । एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि । ' नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ' (का. २।२३) इति । अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायमुक्त्वा, यमेवैष आत्मा वृणुते तेन लभ्य–

---

अतः स्मृतिर्दर्शनसमानाकारेत्यङ्गीकर्तव्यमिति भावः । **एवं च सति** । उपायदशापन्नज्ञानस्य दर्शनरूपत्वे सिद्धे सति । **इत्यनेन** । इत्यादिनोपायप्रदर्शनपरेण वाक्येन । स्मृतेरपरोक्षत्वं कथमिति चेत्तत्राह–**भवति चेति** । **भावना** वासना । दर्शनरूपत्वं च विशदतराभासरूपत्वम् । **वाक्यकारेण** । सूत्रकाराभिप्रायज्ञेन । **प्रपञ्चितम्** । वाक्यचतुष्टयेन पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः । **वेदनमिति** । इदं सिद्धान्तवाक्यम् । पूर्वपक्षमाह–**सकृदिति** । यथा प्रयाजादयः सकृदनुष्ठिता दर्शपूर्णमासफलोपकारिणस्तथा सकृत्प्रत्यय एव मोक्षोपकारीति तमेव कुर्यात् न तदावृत्तिरूपं ध्यानम्, तावता शब्दार्थस्य शास्त्रार्थस्य कृतत्वात् शास्त्रस्य कृतार्थत्वादित्यर्थः । **सिद्धान्त्विति** । सिद्धान्तस्त्वित्यर्थः । उपासनशब्दार्थं चतुर्थवाक्येनाह-**उपासनमिति** । **दर्शनात्** । लोके तथा दर्शनात् । **निर्वचनम्** । निष्कृष्टं प्रमाणभूतं वचनं निर्वचनं श्रुतिवाक्यम् । अथवोपासनशब्दस्य निरुक्तिः । उपपूर्वस्यासधातोर्हि विजातीयप्रत्ययान्तराव्यवहितं चिन्तनमर्थः।

**विशिनष्टीति** । साक्षात्काररूपत्वेनेत्यर्थः । अग्रिमश्रुतौ ' विवृणुते तनुं स्वाम् ' इत्युक्तेः । **प्रवचनेन** । मननेन । **मेधया** । निदिध्यासनेन । **यमेवेति** । एष आत्मा यमेव भक्तं वृणुते स्वीकरोति स्वात्मप्राप्त्यर्थं प्रयतते बुद्धियोगं ददातीति यावत् । तेनैव भक्तेनायमात्मा लभ्यः । एष आत्मा स्वां तनुं तस्य भक्तस्य विवृणुते इत्यर्थः । **केवलेति** ।

इत्युक्तम् । प्रियतम एव हि वरणीयो भवति । यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति । यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत—इति भगवतैव उक्तम्—

'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते' (गी. १०।१०) इति ।
'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' (गी. ७।१७) इति च ।

अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिरेवमभिधीयते—'तमेव विदित्वा अतिमृत्युमेति' (श्वे. ३।८) 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' (नृ. पू. उ. ६)

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन' (गी. ११।५३)
'ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया (गी. ११।५४) इति ।

---

केवलत्वं च परमात्मकृतवरणराहितत्वम् । **यस्य** । भक्तस्य । **अयम्** । परमात्मा । **सः** भक्तः । **अस्य** । परमात्मनः । **यथायमिति** । अयम् । भगवति निरतिशयप्रीतिमान् । **प्रियतमः** । निरतिशयभगवत्प्रीतिविषयः । **सततयुक्तानाम्** । सततयोगं काङ्क्षन्ताम् । 'आशंसायां भूतवच्च' (पा० सू० ३।२।१३२) इति कर्तरिक्तः । प्रीतिपूर्वकमिति मध्यमणिन्यायेनोभयान्वयि । **स्मर्यमाणेति** । स्मृतिविषयस्य परमात्मनो निरतिशयप्रियत्वेन स्मृतेरपि निरतिशयप्रियत्वम् । अर्थेनैव विशेषोहि निराकारतया धियामित्युक्तेः । स्वतो निराकारायां बुद्धौ विषयसम्बन्धेनैव विशेष इति तदर्थः । **यस्य** । भक्तस्य । **अतएव** । मोक्षसाधनज्ञानस्य भक्तिरूपत्वादेव । **तमेव** । परमात्मानमेव । विदित्वा मृत्युमत्येतीत्यर्थः । **अयनाय** । मोक्षाय । **इज्यया** । यज्ञेन । अस्त्वेवं वे-

---

१ ख. मप्यत्यर्थं.

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति ‘ यज्ञादिश्रुतेरश्ववत् ’ ( ब्र. सू. ३।४।२६ ) इत्यभिधास्यते । यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते । तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य आप्रायणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च, ‘ आप्रायणात् तत्रापि हि दृष्टम् ’ ( ब्र. सू. ४।१।१२ ) ‘ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ( ब्र. सू. ४।१।१६ ) ’ सहकारित्वेन च ’ ( ब्र. सू. ३।४।३३ ) इत्यादिषु ।

वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्चेति । विवेकादीनां स्वरूपञ्चाह—जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेक—इति । अत्र निर्वचनम् , आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिरि-

---

दनस्य भक्तिरूपोपासनत्वं, तस्य कर्मापेक्षा कथमत आह । **एवंरूपाया इति ।** मोक्षोपायभूतज्ञानावस्थाविशेषाः कर्मसाध्या इति भावः । ‘ यज्ञेन विविदिषन्ति ’ ( बृ. ४।४।२२ ) इत्यत्र यज्ञस्य पूर्वोक्तवेदनसाधनत्वमेव, नत्विच्छासाधनत्वम् । असिना जिघांसतीतिवत् । इच्छासाधनत्वेऽप्याह—**यद्यपीति । अभ्यासेति ।** अभ्यासेनाधेयः फलोत्पादनक्षमत्वरूपो विशेषो यस्मिन्नित्यर्थः । **आप्रायणात् ।** मरणपर्यन्तम् । अस्मिन्नर्थे सूत्रकारसंमतिमाह—**आप्रायणादिति** । मोक्षसाधनमुपासनमाप्रायणादामरणादनुवर्तनीयम् । हि यतः उपासनोद्योगमारभ्य मरणपर्यंत यः कालस्तत्र सर्वत्रापि उपासनं ‘ सखल्वेवं वर्तयन्यावदायुषम् ’ ( छां. ८।१५।१ ) इति श्रुतौ दृष्टमिति सूत्रार्थः । **अग्निहोत्रादीति ।** अग्निहोत्रादि कर्म तु तेषां विद्याख्यकार्यायैव, ‘ विविदिषन्ति यज्ञेन ’ ( बृ. ४।४।२२ ) इति श्रुतौ तस्य विद्यासाधनत्वदर्शनादिति तदर्थः । **सहकारित्वेनेति ।** विद्योत्पत्तिद्वारेण विद्यासहकारितयाप्यनुष्ठेयानि कर्माणीति तदर्थः ।

**विवेकादिभ्यः ।** विवेकादिसततसाधनेभ्यः । न तु केवलकर्मणा शमादिनाचेत्यर्थः । वाक्यकारग्रन्थमाह—**तल्लब्धिरिति ।** ध्रुवानुस्मृतिलब्धिरित्यर्थः । अत्र विवेकादिषु कारणत्वं व्यासज्यवृत्ति, न तु प्रत्येकपर्याप्तमिति बोध्यम् । **निर्वचनम् ।** अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनं निर्वचनम् । **जातीति ।** जातिदुष्टं कलञ्जगृञ्जनादि ।

इति। विमोकः कामानभिष्वङ्ग—इति। 'शान्त उपासीत' (छां. ३।१४।१) इति निर्वचनम्। आरम्बणसंशीलनं पुनः पुनरभ्यास—इति। निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण, 'सदा तद्भावभावितः' (गी. ८।६) इति। पञ्चमहायज्ञाद्यनुष्टानं शक्तितः क्रियेति। निर्वचनं, क्रियावानेष ब्रह्मविदां वरिष्ठः। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसानाशकेन' (बृ. ४।४।२२) इति च। सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानीति। निर्वचनं, 'सत्येन लभ्यस्तेषामेवैष विरजोब्रह्मलोक' (प्र. १।१६) इत्यादि। देशकालवैषम्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जन्यं दैन्यमभास्वरत्वं मनसोऽवसाद—इति तद्विपर्ययोऽनवसादः। निर्वचनं, 'नायमात्मा बलहीनेन लभ्यः' (मुं. ३।२।४) इति। तद्विपर्ययजा तुष्टिरुद्धर्षः, तद्विपर्ययोऽनुद्धर्ष—इति। अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि, 'शान्तो दान्त' (बृ. ४।४।२३) इति।

एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति। तथा च श्रुत्यन्तरं, 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं, स ह अवि-

---

आश्रयदुष्टं पतितादिस्वामिकम्। निमित्तदुष्टमुच्छिष्टादि। एतत्त्रिविधदोषरहितादन्नात्कायशुद्धिर्विवेक इत्यर्थः। **आरम्बणेति**। आरम्बणमालम्बनं शुभाश्रयस्तस्य पुनः पुनः संशीलनं परिशोधनमित्यर्थः। **भाष्यकारेण**। द्रमिडाचार्येण। **अनाशकेन**। कामानशनयुक्तेन। रागद्वेषप्रयुक्तं यद्विषयसेवनं तदभावः कामानशनम्। यदृच्छालाभसंतुष्टत्वमितियावत्। **सत्येति**। सत्यं भूतहितम्। आर्जवं वाक्कायानामैकरूप्यम्। दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्। दानं लोभराहित्यम्। अहिंसा कायेन वाचा मनसा च परपीडानिवृत्तिः। अभिध्या परकीये स्वबुद्धिः। यद्वा निष्फलचिन्ता। अथवा परकृतापराधचिन्ता। तद्राहित्यमनभिध्या। **शोकवस्तु**। शोकनिमित्तवस्तु। आदिशब्देन भयसंग्रहः। अतीतविषयः शोकः। आगामिविषयं भयमिति विवेकः। अभास्वरत्वमिति दैन्यशब्दविवरणम्। तच्चाभीष्टकार्यप्रवृत्त्यक्षमत्वरूपम्। **बलहीनेन**। मनोबलहीनेन। **तद्विपर्ययजेति**। देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजन्येत्यर्थः। **तुष्टिः**। सन्तोषः। **अतिसन्तोष इति**। शोकस्येवास्यापि मनःशैथिल्यहेतुत्वादिति भावः।

**एवं नियमयुक्तस्य**। विवेकादिसाधनसप्तकयुक्तस्य। **विद्यां चेति**। शंकराचा-

द्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' ( ई. ११ ) इति। अत अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म। अविद्यया कर्मणा मृत्युं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा अपोह्य, विद्यया ज्ञानेनामृतं ब्रह्म अश्नुते प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरत् विहितं कर्मैव। यथोक्तम्,

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।

ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ( वि. पु. ६।६।१२) इति।

ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतया उभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयविरोधित्वम् 'एष एवासाधु कर्म कारयति, तं यमधो निनीषति'

---

र्यास्तु अविद्याया ज्ञातव्यत्वं च हेयत्वेन। 'अविद्ययाऽज्ञानेन मृत्युं संसारं तीर्त्वा प्राप्य स्थितो विद्ययाऽमृतमश्नुते' इति व्याचख्युः। तन्निरासार्थमाह–**अत्रेति**। विद्यां चाविद्यां चेत्यस्य विद्यानुबन्धि शमदमादि कर्मानुबन्धि फलाभिसन्धिकर्तृत्वाभिमानराहित्यादिकं चेत्यर्थः। अथवा चशब्दावुक्तार्थविरोधिसमुच्चयपरौ। तथा च विद्या ब्रह्मज्ञानं तद्विरोधि विषयरागद्वेषादिकम्। अविद्या विद्याङ्गं कर्म तद्विरोधि संसारहेतुभूतं फलाभिसन्धिसहितं कर्म। एतदुभयस्य ज्ञातव्यत्वं च हानार्थमित्यर्थः। **प्राचीनं कर्म**। पुण्यपापरूपम्। **अपोह्येति**। तरतेरुत्तरणवाचित्वं स्वरससिद्धम्। प्राप्तिवाचित्वे तु स्वरसभङ्ग इति भावः। **विद्येतरदिति**। अविद्याशब्दस्य विद्येतरत्वं प्रवृत्तिनिमित्तम्। तच्च विहितकर्मण्यस्तीति भावः। 'अविद्यया मृत्युं तीर्त्वा' इति पदानां स्वोक्तेऽर्थे संमतिमाह–**इयाजेति**। सः ब्रह्मवेत्ता केशिध्वजो नृपः। **ज्ञानव्यपाश्रयः**। आगमोत्थज्ञानवान्। **ब्रह्मविद्यामधिष्ठाय**। उपासनात्मकं ज्ञानं साध्यत्वेन अवलम्ब्य। अत्र तर्तुमिति तृधातोः प्राप्त्यर्थो नैव संभवति। न हि 'ब्रह्मवेत्ता संसारप्राप्त्यर्थं कर्म करोति' इति युक्तम्। **अनिष्टफलतयेति**। इदमेव पापशब्दप्रवृत्तिनिमित्तम्। अलौकिकत्वे सत्यनिष्टफलासाधारणकारणत्वं पापत्वम्। अतएव शास्त्रादावीश्वरे च नातिव्याप्तिः। देवेन्द्रत्वस्यापि वासुदेवभक्त्यन्तरायत्वेन निरयतुल्यतया तज्जनकपुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलदत्त्वमेवेति बोध्यम्। **अस्य च**। पापस्य च। **असाधु कर्म**। फलाभिसन्धिकर्तृत्वाभिमानसहितं यज्ञादिकं ब्रह्महत्यादिकं च। **अधो निनीषतीति**। अधोनयनं स्वर्गप्रापणं नरकप्रापणं च। यत्समस्तलोकेभ्य उन्नयनमपवर्गप्रापणरूपं तदपे-

(कौ. ३।८) इति श्रुत्यावगम्यते। रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्। 'सत्त्वात् सञ्जायते ज्ञानम्' (गी. १४।१७) इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म्म निरसनीयम्। तन्निरसनञ्चानाभिसंहितफलेनानुष्ठितेन धर्म्मेण। तथाच श्रुतिः 'धर्म्मेण पापमपनुदति' (म. ना. २२।१) इति। तदेवं ब्रह्मप्राप्तिसाधनभूतं ज्ञानं सर्वाश्रमधर्म्मापेक्षम्। अतोऽपेक्षितं कर्म्मस्वरूपज्ञानं केवलकर्म्मणामल्पास्थिरफलत्वज्ञानञ्च कर्म्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्ममीमांसायाः पूर्ववृत्ता वक्तव्या।

अपिच, नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते। फलसाधनेतिकर्त्तव्यताधिकारिविशेषनिश्चयादृते कर्म्मस्वरूपतत्फलततस्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वञ्च

---

क्षया स्वर्गप्रापणस्याप्यधोनयनत्वात्। **अतः**। पापस्य ज्ञानविरोधित्ववचनात्। **पापं कर्म**। पूर्वोक्तमुभयविधम्। **अनभिसंहितफलेनेति**। अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः। **अनुष्ठितेन**। न तु ज्ञानमात्रेण। **धर्मेणेति**। 'निष्कामकर्मस्वरूपधर्मेण पूर्वोक्तोभयविधपापस्य नाशः' इत्यर्थः। ज्ञानस्य कर्मसापेक्षत्वं निगमयति–**तदेवमिति**। तत्। श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकारवचनेभ्यः। **अतः**। ब्रह्मज्ञानस्य फलाभिसन्धिरहिताश्रमकर्मापेक्षत्वात्। अत्रेदं बोध्यम्। कर्मज्ञानं कर्मण उपादानार्थं हानार्थं च। तत्र स्वरूपेणोपादानं फलद्वारा च हानमिति।

इदानीं साधनचतुष्टयस्य अनपेक्षितत्वेन पूर्ववृत्तत्वं खण्डयति। **अपि चेति**। **नित्यानित्यवस्तुविवेकादयश्चेति**। चकारः प्रत्युतेत्यर्थे। **मीमांसाश्रवणम्**। पूर्वोत्तरभागद्वयरूपमीमांसाश्रवणम्। **फलेति**। फलविशेषो भोगमोक्षरूपः। साधनविशेषो यज्ञोपासनादिः। इतिकर्तव्यताविशेषः प्रयाजादिः साधनसप्तकं च। अधिकारिविशेषो बुभुक्षुर्मुमुक्षुश्च। कर्मस्वरूपं साङ्गं यज्ञात्मकमुपासनात्मकं च। **दुरवबोधत्वादिति**। तथाचैतन्मीमांसाया न साधनचतुष्टयापेक्षा। किंतु साधनचतुष्टयस्यैव मीमांसापेक्षेति भावः। किंच 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' (बृ. ४।४।२३) इति श्रुतिरेवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य पश्येदिति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति। अतः शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धम्। 'प्रशान्तचित्ताय' (मुं. १।२।१३) इत्यादि श्रुतिस्तु श्रवणौपयिकावधानानिष्पादनार्थेति बोध्यम्। प्रकारान्तरेण साधनचतुष्टयस्य कर्मविचारापेक्षत्वं दर्शयति–**एषामिति**। शमादीनामित्यर्थः।

विनियोगावसेयम् । विनियोगश्च श्रुतिलिङ्गादिभ्यः । स च तार्त्तीयः । उद्गीथाद्युपासनानि कर्म्मसमृध्यर्थान्यपि ब्रह्मदृष्टिरूपाणीति ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि । तान्यपि कर्म्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादनानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि । तेषाञ्च कर्म्मस्वरूपाधिगमापेक्षा सर्वसम्मता ।

---

**विनियोगः** । अङ्गत्वज्ञापनम् । **श्रुतिलिङ्गादिभ्य इति** । आदिशब्देन वाक्य प्रकरणस्थानसमाख्यानां ग्रहणम् । तत्र निरपेक्षो रवः श्रुतिः । व्रीहीन्प्रोक्षतीत्यत्र द्वितीयाश्रुत्या व्रीहीणां प्रोक्षणाङ्गत्वम् । शब्दसामर्थ्यं लिङ्गम् । बर्हिर्देवसदनं दामीतिमन्त्रस्य दाधातोश्छेदनार्थत्वेन कुशच्छेदनाङ्गत्वम् । समभिव्याहारो वाक्यम् । यस्य पर्णमयी जुहूर्भवतीत्यत्र पर्णताजुह्वोः समभिव्याहारेण पर्णताया जुह्वङ्गत्वम् । उभयाकांक्षा प्रकरणम् । प्रयाजादिषु समिधो यजतीत्यत्र फलविशेषस्यानिर्देशात्किमित्यस्त्युपकार्याकाङ्क्षा । दर्शपूर्णमासवाक्ये च कथमित्यस्त्युपकारकाकाङ्क्षा । अतः प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । स्थानं क्रमः । ऐन्द्राग्नमेकादशकपालमित्येवं क्रमविहितेष्टिषु इन्द्राग्नीरोचनेत्यादिमन्त्राणां प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं क्रमेण विनियोगः । समाख्या यौगिकः शब्दः । आध्वर्यवनामककर्मण आध्वर्यव इति समाख्ययाऽध्वर्युकर्तृकत्वं ज्ञायते । अधिकं पूर्वमीमांसायां तृतीयाध्याये द्रष्टव्यम् । तदेवाह–**तार्तीय इति** । पूर्वमीमांसातृतीयाध्यायोक्त इत्यर्थः । इदमुपलक्षणम् । ब्रह्मविचारस्य कर्मविचारोक्तप्रमाणादिविषयकृत्स्नन्यायसापेक्षत्वात् । अथ ब्रह्मविचारस्य कर्मविचारापेक्षत्वेऽभ्युच्चययुक्तिरुच्यते- **उद्गीथादीत्यादिना सर्वसंमतेत्यन्तेन** । **कर्मसमृध्यर्थानि** । कर्मफलविशेषसम्पादकानि । **ब्रह्मदृष्टिरूपाणीति** । अब्रह्मणि ब्रह्मत्वेन दृष्टिर्ब्रह्मदृष्टिः । **इहैव** । उत्तरमीमांसायामेव । नोद्गीथाद्युपासनानां केवलं ब्रह्मज्ञानापेक्षत्वेनैवेह चिन्तनीयत्वमपि तु ब्रह्मविद्योत्पादकनिष्कामकर्मसाद्गुण्यापादकत्वेनापीत्याह–**तान्यपीति** । यत्समृध्यर्थान्युद्गीथाद्युपासनानि तान्यपीत्यर्थः । प्रबलप्रतिबन्धके सत्यपि शीघ्रफलदत्वं साद्गुण्यापादकत्वम् । अस्तूद्गीथाद्युपासनानामिह चिन्तनीयत्वं तथापि कथं ब्रह्मविचारस्य कर्मविचारापेक्षेत्यत आह–**तेषां चेति** । उद्गीथाद्युपासनानां चेत्यर्थः ।

यदप्याहुरशेषविशेषप्रत्यनीकाचिन्मात्रं ब्रह्मैव परमार्थः। तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्। 'सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्' (छां. ६।२।१) 'अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं. १।१।५-६) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २।१।१)

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. ६।१९)

'यस्यामतं तस्य मतं मतं यस्य न वेद सः।

---

अथ साधनचतुष्टयपूर्ववृत्तत्ववादिनां शंकरमतानुयायिनां मतं महापूर्वपक्षरूपेणोपक्रमते—**यदप्याहुरिति**। अशेषविशेषा ज्ञात्रादयस्तत्प्रत्यनीकं स्वज्ञानेनैव तन्निवर्तकं शुक्तिरिव रजतस्येत्यर्थः। **चिन्मात्रमिति**। चिच्छब्देन तुच्छत्वव्यावृत्तिः। स्वयंप्रकाशत्वं हि चित्वम्। मात्रशब्देन ज्ञेयत्वव्यावृत्तिः। प्रत्यनीकत्वधर्मोऽप्यनेन व्यावर्त्यते। **ब्रह्मैवेति**। एवकारेण सगुणब्रह्मव्यावृत्तिः। **परमार्थः**। तत्वावेदकप्रमाणविषयः। **तदतिरेकि**। तद्व्यतिरिक्तम्। आदिशब्देन जन्मजरामरणादिसंग्रहः। **तस्मिन्नेवेति**। अनेन निरधिष्ठानभ्रमव्युदासः। एवकारेणाधिष्ठानबहुत्वनिषेधः। तथा सति हि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्वसिद्धिः। अत्र प्रमाणभूतवाक्यान्युदाहरति—**सदेवेत्यादिना**। हे सोम्य इदमग्रे सृष्टेः पुरा सदेवासीदित्यर्थः। अनेन विजातीयभेदव्यावृत्तिः। **एकमेवेति**। अनेन सजातीयभेदव्यावृत्तिः। **अद्वितीयमिति**। अनेन स्वगतभेदव्यावृत्तिः। **अथेति**। अथ परा विद्या कथ्यते यया परविद्यया तदक्षरं ब्रह्माधिगम्यते इत्यर्थः। **अद्रेश्यं** प्रत्यक्षागोचरम्। **अग्राह्यम्**। अनुमानाद्यगोचरं कर्मेन्द्रियागोचरं वा। **अगोत्रम्**। अनामकम्। **अवर्णं** वर्णो नीलादिस्तद्रहितम्। **अचक्षुःश्रोत्रं** ज्ञानेन्द्रियरहितम्। **अपाणिपादं** कर्मेन्द्रियरहितम्। **नित्यं** कालतः परिमाणरहितम्। **विभुं** देशतः परिमाणरहितम्। **सर्वगतं** सर्वेण जगता अधिष्ठानतया गतमाश्रितम्। अनेन वस्तुपरिच्छेदराहित्यं सूच्यते। अदृश्यत्वादिषु हेतुः—**सुसूक्ष्ममिति**। न तु तुच्छत्वं हेतुरित्याशयः। **भूतयोनिं** भूतानां योनिं मूलकारणम्। **निष्कलमिति**। व्याख्यातं प्राक् (पृ. १४पं.१६)। **यस्येति**। यस्य ब्रह्मविदोऽमतमविज्ञातं ब्रह्मेति मतमभिप्रायो निश्चयस्तस्य मतं ज्ञातं सम्यक् ब्रह्मेत्यभिप्रायः। यस्य पुनर्मतं 'ज्ञातं विदितं मया ब्रह्म' इति निश्चयः स न वेदैव न ब्रह्म विजानाति सः। विद्वदविदुषोर्यथो-

अविज्ञातं विजानतां विज्ञातमविजानताम् ' ( के. ११ )

' न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः ' ( बृ. ३।४।२ ) ' आनन्दो ब्रह्म ' ( तै. ३।६।१ ) ' इदं सर्वंयदयमात्मा ' ( बृ. २।४।५ ) ' नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ' ( बृ. ४।४।१९ ) ' यत्र हि द्वैतमिव भवति; तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् , तत केन कं पश्येत् तत् केन कं विजानीयात् ' ( बृ. २।४।१४ ) ' वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' ( छां. ६।१।४ ) ' यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति ' ( तै. २।७।१ ) ' न स्थानतोऽपि, परस्योभयलिङ्गं सर्वत्र हि ' ( ब्र. सू. ३।२।११ ) ' मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ' ( ब्र. सू. ३।२।३ )

---

क्तौ पक्षाववधारयति उत्तरार्धेन—**अविज्ञात**ममतमविदितमेव ब्रह्म **विजानतां** विज्ञातमित्यभिमानवताम् । **अविजानतां** तदभिमानरहितानां विदुषां **विज्ञात**मेवेत्यर्थः । अनेन ज्ञेयत्वनिषेधः सूचितः । **न दृष्टेरिति** । अनेन ज्ञातृत्वनिषेधः सूच्यते । भेददर्श्यत्यन्ताज्ञ इति दर्शयति—**मृत्योरिति** । मृत्योः सकाशान्मृत्युं पुनर्मृत्युमित्यर्थः । इवशब्देन नानात्वस्यापारमार्थ्यं दर्शितम् । **वाचारम्भणमिति** । वाचारम्भणं वागालम्बनम् । कोसौ विकारो नामधेयम् । वागालम्बनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति । परमार्थतो मृत्तिकैव सत्यं वस्त्वस्तीत्यर्थः । **यदेति** । एतस्मिन्नात्मनि उत् इति निश्चये अरं स्वल्पमन्तरं भेदं कुरुते मन्यते इत्यर्थः । **न स्थानत इति** । परस्य ब्रह्मणः उभयलिङ्गं सविशेषनिर्विशेषलिङ्गं स्वभावतस्तु नास्त्येव परंतु स्थानतोप्युपाधितोऽपि नास्ति । हि यतः सर्वत्र ब्रह्मस्वरूपप्रतिपादनपरेषु ' अशब्दम् ' ( का. ३।१५ ) इत्यादिवाक्येषु अपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते इत्यर्थः । **मायामात्रमिति** । स्वाप्नसृष्टिर्मायामात्रमेव, कार्त्स्न्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपत्वाभावादित्यर्थः । अनेन स्वप्नसृष्टिमिथ्यात्ववज्जगन्मिथ्यात्वं

‘ प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ’ ( वि. पु. ६।७।५३ )
‘ ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ’ ( वि. पु. १।२।६ )
‘ परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ’ (वि. पु. १।४।३८)
‘ यदेतद् दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ’ ( वि. पु.१।४।३९-४०-४१)
‘ तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतमिथ्यात्वदर्शिनः ’ (वि. पु. २।१४।३१)
‘ यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयञ्चान्यो वक्तुमेवमपीष्यते ’ ( वि. पु. २।१३।८५ )
‘ वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथासौ परमात्मनः ’ ( वि. पु. २।१४।३२ )
‘ सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्य्यस्तत्याज भेदं परमार्थदृष्टिः’ (वि. पु. २।१६।२४)
‘ विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कःकरिष्यति ’ ( वि. पु. ६।७।९४ )
‘ अहमात्मा गुडाकेश सर्वभूताशयस्थितः ’ ( गी. १०।२० )
‘ क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत ’ ( गी. १३।२ )

---

दृष्टान्ततया दर्शितम् । **प्रत्यस्तमितभेदमिति** । सजातीयविजातीयभेदरहितमित्यर्थः । **सत्तामात्रं** स्वगतभेदरहितम् । अत एव वचसामगोचरम् । **वेणुरन्ध्रेति** । यथा

' न तदस्ति विना यत् स्यान्मया भूतञ्चराचरम् ' (गी.१०।३९)

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्, अन्यत् सर्वं मिथ्या—इत्यभिधानात् । मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा रज्ज्वाद्यधिष्ठानकसर्पादेः । दोषवशाद्धि तत्र तत्कल्पनम् । एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । ' अनृतेन हि प्रत्यूढाः '( छां. ८।३।२ ) ' तेषां सत्यानां सतामनृतमपिधानम् ' ( छां. ८।३।१ ) ' नासदासीन्नो सदासीत् तदानीम् ' ( तै. ब्रा. ) ' तम आसीत्, तमसा गूढमग्रे

---

मुरलीवादनादौ । **अभिधानादिति** । अस्य ' अशेषविशेष ' ( पृ. २६ पं. १ ) इत्यादिपूर्वप्रतिज्ञावाक्येन सहान्वयः । **मिथ्यात्वमिति** । यथा रज्जौ सर्पस्य मिथ्यात्वम् । तस्य सर्पस्य पूर्वं प्रतीयमानत्वात् । पश्चात् रज्जुरूपयथावस्थितवस्तुनो ज्ञानेन तस्य सर्पस्य निवर्त्यत्वाच्च । दंडनिवर्त्ये घटादावतिव्याप्तिवारणाय ज्ञानशब्दः । प्रबलभ्रान्तिज्ञाननिवर्त्यसत्यरजतादिष्वतिव्याप्तिवारणाय यथावस्थितवस्तुशब्दः । ज्ञानप्रागभावेऽतिव्याप्तिवारणाय प्रतीयमानत्वपूर्वकेति । प्रतीयमानत्वं च नियमेन प्रतीयमानत्वम् । तेन ज्ञानप्रागभावस्य कदाचित्प्रतीयमानत्वेऽपि न क्षतिः । **एवमिति** । न च ब्रह्मणः सर्वज्ञत्वेन तत्र कथमध्यास इति वाच्यम् । सर्वज्ञत्वादिगुणा अपरे ब्रह्मणि । सर्वसाधारणसन्मात्ररूपे परे ब्रह्मणि तु चिन्मात्ररूपतया सर्वज्ञत्वादिगुणानन्वयादध्यासस्य योग्यत्वात् । **दोषश्चेति** । अनाद्यविद्यैव दोषः । सा चाविद्याऽवस्थाभेदेन ब्रह्मस्वरूपतिरोधानहेतुः विविधविचित्रसंसारहेतुश्च भवति । **सदसदिति** । सत्वेनासत्वेन च निर्वक्तुमशक्येत्यर्थः । एतेनाविद्याया अपरमार्थत्वं सूचितम् । परमार्थत्वे तु ज्ञाननिवर्त्यत्वं न स्यात् । न चापरमार्थत्वे तस्याः कल्पकान्तरापेक्षायामनवस्था स्यादिति वाच्यम् । अनादित्वेनादोषात् । ईदृशाविद्यासत्वे प्रमाणमाह—**अनृतेनेत्यादिना** । अनृतं मिथ्याज्ञानम् । तत्प्रयोज्यविषयतृष्णेहानृतशब्देनोच्यते । तेनानृतेन प्रजाः प्रत्यूढाः हृताः । अविद्यादिदोषैः स्वरूपाद्बहिरपकृष्टा इत्यर्थः । **तेषामिति** । तेषां सत्यानामात्मस्थानां कामानां ' ब्रह्मज्ञानिनः संकल्पादेव पित्रादयः समुत्तिष्ठन्ति '

प्रकेतम् ' ( तै. ब्रा. ) ' मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ' ( श्वे. ४।१० ) ' इन्द्रो मायाभिः पुरुरूप ईयते ' ( बृ. २।५।१९ ) ' मम माया दुरत्यया ' ( गी. ७।१४ ) ' अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ' ( गौ. पा. का. १।१६ ) इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते । यथोक्तम् ,—

' ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्नतु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वकर्म्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥ '

( वि. पु. २।१२।३९-४० )

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचित् द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्म्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥

---

इत्यादिपूर्वोक्तानां अनृतं मिथ्याज्ञानमपिधानमाच्छादनमिवेत्यर्थः । **प्रकेतं** ज्ञानम् । **मायामिति** । जगतः प्रकृतिर्माय़ैवेति विद्यात् । तथा महेश्वरं मायिनं मायायाः सत्तास्फूर्त्यादिप्रदतयाऽधिष्ठानत्वेन प्रेरयितारं विद्यादित्यर्थः । **इन्द्र इति** । इन्द्रः परमेश्वरो मायाभिर्नामरूपकृतमिथ्याभिमानैर्न तु परमार्थतःपुरुरूपः बहुरूपः ईयते गम्यते एकरूप एव सन्नित्यर्थः । **ब्रह्मैव** । इन्द्रादिशब्देन प्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः । **ज्ञानेति** । शैलाब्ध्यादिसङ्घो न वस्तुभूतः यतोऽसावशेषमूर्तिर्भगवान् ज्ञानस्वरूपएवेत्यर्थः । **विज्ञान**मविद्या । विविधंज्ञायतेऽनेनेति करणव्युत्पत्तेः । **यदेति** । शुद्धमविद्यारहितम् । निजरूपि भेददर्शनरहितम् । दोषाः रागादयः । तद्रहितं ज्ञानं यदा भवति तदा वस्तुषु अविद्यावस्तुषु वस्तुभेदा देवाद्याकारभेदास्तद्रूपाणि सङ्कल्पवृक्षस्य फलानि न भवन्तीत्यर्थः । **निजेति** । स्वस्वकर्मभेदेन भिन्नानि चित्तानि चित्तरूपाणि येषां तैः । **सदैकम्** । जन्मवृध्द्यादिरहितम् । अयमेव सिद्धान्त इत्याह—

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते'
( वि. पु. २।१२।४३-४४-४५ ) इति ।

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति । न पुनर्मृत्यवे तदेकं पश्यति ', ' न पश्यो मृत्युं पश्यति ' (छां,७।२६।२) ' यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ' ( तै. २।७।१ )

' भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ' ( मुं. २।२।८ )

' ब्रह्म वेद ब्रह्मैव भवति ' ( मुं. ३।२।९ ) ' तमेव विदित्वातिमृत्युमेति, नान्यः पन्था अयनाय विद्यते ' ( श्वे. ३।८ ) इत्याद्याः श्रुतयः । अत्र मृत्युशब्देनाविद्याभिधीयते । यथा सनत्सुजातवचनम् ' मोहो वै मृत्युः सम्मतो यः कवीनामिति । प्रमादं वै मृत्युमहं ब्रवीमि । सदाऽप्रमादममृतत्वं ब्रवीमि ' ( स. १।४ ) इति । ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै. २।१।१ ) ' विज्ञानमानन्दं ब्रह्म ' ( बृ. ३।९।२८ ) इत्यादिशोधकवाक्यावसेयनिर्विशेषचि-

---

**सद्भाव इति** । सद्रूपो भावः सिद्धान्त इति यावत् । **एतदिति** । भुवनेनाधिष्ठानतयाश्रितं समन्ताद्व्यवहारविषयभूतं यदेतद्वर्तते तत्रापि कारणमविद्येत्युक्तमित्यर्थः । **न पुनरिति** । यस्तदेकं पश्यति स पुनर्मृत्यवेऽविद्यायै न प्रभवति । मृत्युकारणस्य रोगादेरपि निवृत्तिं ज्ञापयति **नपश्य इति** । ' न रोगं नोत दुःखताम् ' इति हि तच्छेषः । **एतस्मिन्** ब्रह्मणि । **अनात्म्ये** अशरीरे । **अनिरुक्ते** नाम्नाऽनिर्वचनीये । **अनिलयने** अनाधारे । **अभयमिति** । अव्ययीभावः। अभयार्थमित्यर्थः । **प्रतिष्ठां** निष्ठाम् । **ब्रह्म वेदेति** । यथोपासनं हि फलम् । ऐक्यज्ञानमेव बन्धनिवर्तकमिति भावः । नन्वत्राविद्यानिवृत्तिर्न प्रतीयते अविद्यावाचिशब्दाश्रवणादित्यत आह—**अत्रेति** । **मोह इति** । वस्तुनः स्वरूपेणाज्ञानं प्रमादः । अन्यस्वरूपेण ज्ञानं मोहः । तत्र मोह एव मृत्युरिति कवीनां संमतमस्ति । परन्त्वहं मोहहेतुः प्रमाद एव मृत्युः इति ब्रवीमीति फलितोर्थः । ननूदाहृतेषु वाक्येषु ज्ञानस्याविद्यानिवर्तकत्वं दृष्टम् । परं तु ब्रह्मणो निर्विशेषचिन्मात्रत्वं तेनात्मन एकत्वविज्ञानं निवर्तकमिति च न प्रतिपन्नमत आह—**सत्यं ज्ञानमिति** । **इत्यादीति** । आदिशब्देनास्थूलमनण्वित्यादिवाक्यसंग्रहः । इ-

न्मात्रस्वरूपब्रह्मात्मैकत्वविज्ञानञ्च 'अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति, न स वेद' (बृ. १।४।१०) 'आत्मेत्येवोपासीत' (बृ. १।४।७) 'तत्त्वमसि' (छां. ६।८।७) 'त्वञ्चाहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते, तद्योऽहं सोऽसौ, योऽसौ सोऽहम्' इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र. सू. ४।१।३) इति। तथा चाह वाक्यकारः 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति। अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिरुक्ता।

ननु च, सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रार्थजन्यविज्ञानेन क्रियते। कथं वा, रज्जुरेषा न सर्प–इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते। तत्र द्वयोः प्रत्यक्षयोर्विरोधः। इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति, चेत्तुल्ययार्विरोधे कथं बाध्यबाधकभावः।

---

त्यादिशोधकवाक्यावगम्यमानं यन्निर्विशेषस्वरूपं ब्रह्म तेन सह जीवात्मनः एकत्ववि- ज्ञानं च वक्ष्यमाणवाक्यसिद्धमित्यर्थः। **आत्मेतितूपेति**। आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। यतो मुमुक्षव उपासने तथाऽभ्युपगच्छन्ति। ग्राहयन्ति च तथा शास्त्राणीति सूत्रार्थः। **तन्निष्पत्तेः**। तत्र ब्रह्मणि कल्पितत्वात्। युक्तिमप्याह–**अनेन चेति**। **मिथ्यारूपस्येति**। हेतुगर्भविशेषणमेतत्।

भेदवादी शङ्कते–**ननु चेति**। **प्रत्यक्षाविरुद्धा**। भेदप्रत्यक्षविरुद्धा। तत्राभेदवादी चोदयति–**कथं वेति**। **प्रत्यक्षविरुद्धा**। सर्पप्रत्यक्षविरुद्धा। न च सर्पप्रत्यक्षस्याभासत्वाद्बाध्यत्वमिति वाच्यम्। प्रतीतिदशायामाभासत्वानवगमात्। पश्चात्प्रमाणभूतरज्जुप्रत्यक्षेण बाधादाभासत्वं ज्ञायत इति चेत्। प्रपंचग्राहिप्रत्यक्षस्यापि तुल्यम्। आभासत्वज्ञानोत्तरं तात्सिद्धिस्तात्सिद्धौ चाभासत्वसिद्धिरित्यन्योन्याश्रयग्रस्तत्वाच्च। पुनर्भेदवादी शङ्कते–**तत्रेति**। **द्वयोःप्रत्यक्षयोः**। रज्जुप्रत्यक्षसर्पप्रत्यक्षयोः। **प्रत्यक्षमूलस्य**। प्रत्यक्षेतरप्रमाणानां प्रत्यक्षमूलकत्वात्। 'प्रत्यक्षेण प्रत्यक्षस्य बाधो हि युक्तः। शास्त्रेण तु स्वप्रयोजकप्रत्यक्षस्य बाधोऽनुचितः शास्त्रस्य प्रत्यक्षसापेक्षत्वात्प्रत्यक्षस्य शास्त्रनिरपेक्षत्वात्' इत्याशयः। अभेदवादी चोदयति–**तुल्ययोरिति**। रज्जुप्रत्यक्षसर्पप्रत्यक्षयोर्मध्ये केन कस्य बाध इति निश्चेतुमशक्यमिति भावः। पुनर्भेदवादी शङ्कते–

पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत् । शास्त्रप्रत्यक्षयोरपि समानमेतत् । एतदुक्तं भवति । बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणं, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवं सति द्वयोः प्रमाणयोर्विरोधे, यत् सम्भाव्यमानान्यथासिद्धि तद्बाध्यम् । अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय—इति । तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च, विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः ।

ननु, अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य

---

**पूर्वोत्तरयोरिति**। पूर्वस्य सर्पप्रत्यक्षस्य दोषजन्यत्वाद्बाध्यत्वमुत्तरस्य रज्जुप्रत्यक्षस्य दोषजन्यत्वाभावाद्बाधकत्वमिति भावः । अभेदवाद्युत्तरयति–**शास्त्रेति** । प्रपञ्चग्राहिभेदप्रत्यक्षस्याविद्यारूपदोषजन्यत्वाच्छास्त्रस्य तदभावात् । एवं च त्वदुक्तशङ्काऽनवकाश इति भावः । **निरपेक्षत्वादीति** । आदिशब्देन दुष्टकारणजन्यत्वतद्भावपरोक्षत्वापरोक्षत्वादिसंग्रहः । **ज्वालेति** । अस्यान्यथेत्यादिः । सादृश्यमूलकं ज्वालैक्यप्रत्यक्षं हि निरपेक्षमप्यपरोक्षमपि दुष्टकारणाजन्यमपि तद्विरुद्धेनानुमानेन बाध्यते । एवमन्यत्रापि प्रत्यक्षस्यानुमानेन बाधो द्रष्टव्यः । तर्हि किं बाध्यबाधकभावप्रयोजकमित्यत्राह–**एवं सतीति** । **संभाव्यमानेति** । यस्य प्रमाणस्य अन्यथा वाद्यस्तविषयेऽप्रवृत्तौ स्वीकृतायां सत्यामन्यत्र सिद्धिः संभाव्यते तदित्यर्थः । सावकाशमिति यावत् । **तस्मादिति** । न आदिर्निधनं च यस्य, न विच्छिन्नः संप्रदायो यस्य, न संभाव्यमानः दोषगंधो यस्य, न अवकाशो यस्येति चत्वारि शास्त्रविशेषणानि । **निधनं** नाशः । **विच्छिन्नो** भ्रष्टः । **शास्त्रं** श्रुतिः । अविच्छिन्नसंप्रदायत्वादेवानादिनिधनत्वं तत एवासंभाव्यमानदोषगन्धत्वमिति बोध्यम् । **शास्त्रजन्येति** । इदमवबोधविशेषणम् । **नित्यं** कालापरिच्छिन्नम् । **शुद्धम**विद्यारहितम् । **मुक्त**मविद्याकृतजन्मादिरहितम् । **बुद्धं** भासमानम् । **विविधः** देवादिरूपेण, स्वकार्यजन्मजरामरणादिरूपेण च । **विकल्पः** ज्ञातृज्ञेयादिः । **भेदवासनादीति** । आदिशब्देन भेददर्शनम् । तयोश्च वासनादर्शनयोः परस्परं हेतुहेतुमद्भावः । अनादित्वाद्बीजाङ्कुरवन्नान्योन्याश्रयः ।

ज्योतिष्टोमेन स्वर्गकामो यजेत—इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत। सत्यम्। पूर्वापरापच्छेदे पूर्वशास्त्रवत् मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात् परस्य ब्रह्मणः।

ननु च 'यः सर्वज्ञः सर्ववित्' (मु. १।१।९) 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे. ६।८) 'सत्यकामः सत्यसङ्कल्पः' (छां. ८।१।५) इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां कथं बाध्यत्वम्। निर्गुणवाक्यसामर्थ्यादिति ब्रूमः। एतदुक्तं भवति। 'अस्थूलमनण्वह्रस्वम्' (बृ. ३।८।८) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २।१।१) 'निर्गुणम्' (चू. ७।२) निरञ्जनम्' (श्वे. ६।१९) इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति। इतराणि च सगुणम्। उभयविधवाक्यानां विरोधे, तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किञ्चिदवहीनम्।

---

**पूर्वापरापच्छेद इति**। अपच्छेदो विच्छेदः। पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति। अध्वर्युं प्रस्तोताऽन्वारभते। प्रस्तोतारं प्रतिहर्ता। प्रतिहर्तारमुद्गाता। उद्गातारं ब्रह्मा। ब्रह्माणं यजमानः। इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते। बहिष्पवमानं प्रसर्पतां यद्युद्गाताऽपच्छिद्येत, अदक्षिणः स यज्ञः संस्थाप्यः। तेन पुनर्यजेत। तत्र तद्दद्याद्यत्पूर्वस्मिन् दास्यन् स्यात्। अथ प्रतिहर्ताऽपच्छिद्येत, सर्ववेदसं दद्यादिति। अत्रोद्गातृप्रतिहर्त्रोरेकस्मिन् प्रयोगे युगपदपच्छेदे उद्गातुः प्राधान्यात्तत्प्रायश्चित्तेनैव निर्वाहः। क्रमेणापच्छेदे तु पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यं पूर्वमीमांसायामुक्तम्। अयमाशयः। पूर्वशास्त्रस्योत्पत्तिरविरोधेनैव। तदानीं विरोधिनः परस्याभावात्। परशास्त्रस्योत्पत्तिस्तु विरोधेनैव। तदानीं विरोधिनः पूर्वस्य सत्त्वादिति विरोधेनोत्पन्नं परमेव प्रबलं भवति। अयमेवापच्छेदन्यायः। **बाध्यत एवेति**। भेदावलम्बि कर्मशास्त्रमित्यभिप्रायः। एवं पूर्वोत्तरभागयोर्विरोधः परिहृतः। अधुनोत्तरभागे विरोधपरिहारमाह **वेदान्तवाक्येष्वपीति**।

**सर्वज्ञः**। सर्वं स्वरूपेण जानाति। **सर्ववित्**। सर्वं प्रकारतो जानाति। **इत्यादिवाक्यानीति**। आदिशब्देन यत्तदद्रेश्यमित्यादि गृह्यते। **इतराणि**। यः सर्वज्ञ इत्यादीनि। **सगुणमिति**। प्रतिपादयन्तीत्यनुषज्यते। **गुणापेक्षत्वेन परत्वादिति**।

ननु च, सत्यं ज्ञानमनन्तं ब्रह्म '( तै. २।१।१ ) इत्यत्र सत्य ज्ञानादयो गुणाः प्रतीयन्ते । नेत्युच्यते । सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत् । अनभिधानज्ञो हि देवानां प्रियः । एकार्थत्वं नाम सर्वपदानामर्थैक्यम् । विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः । ततश्चैकार्थत्वं न सिध्यति । एवं तर्हि सर्वपदानां पर्य्यायता स्यात् , अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽपि अपर्य्यायित्वमवहितमनाः शृणु । एकत्वतात्पर्य्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्य्यायता

---

निषेधस्य निषेध्यसापेक्षत्वेन परत्वमित्यर्थः ।

निर्गुणवाक्येषूपात्तस्य ' सत्यं ज्ञानम् ' इति वाक्यस्य सगुणपरत्वबुध्या चोदयति—**ननु चेति । सत्यज्ञानादय इति** । भावप्रधानो निर्देशः । सत्यत्वज्ञानत्वादय इत्यर्थः । **सामानाधिकरण्येनेति** । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः । उक्तश्रुतौ सत्यादिशब्दानां निषेधमुखप्रवृत्तत्वेन तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वम् । अतद्व्यावृत्तपरत्वमिति यावत् । तथा च सत्यशब्दस्य सत्येतरव्यावृत्तमित्यर्थः । एवमेव ज्ञानानन्तशब्दयोर्बोध्यम् । तथा च ब्रह्मणः सकलेतराविरोधित्वं प्रतिपादयदिदं शोधकवाक्यं व्यावृत्तिपरमेव भवितुं युक्तमिति नात्र विधिमुखेन प्रवृत्तिः शङ्कनीया । न चानेन वाक्येन ब्रह्मण्यतद्व्यावृत्तिरूपधर्मबोधनेनास्य वाक्यस्य सगुणपरत्वमेवेति वाच्यम् । अभावानामधिकरणात्मकत्वेन भेदरूपाया व्यावृत्तेर्ब्रह्मात्मकत्वेन धर्मधर्मिभावासंभवात् । अतः सत्यादिशब्दानां सामानाधिकरण्येनैकस्मिन् ब्रह्मणि तात्पर्यनिश्चयेनैकब्रह्मरूपार्थकत्वमेवेति सत्यत्वादिगुणानामत्राप्रतीतिरित्यभिप्रायः । एतदभिप्रायमजानानः शङ्कते—**अनेकेति** । यथा सत्यं ज्ञानमित्यत्र सत्यत्वादिगुणविशिष्टस्य ब्रह्मरूपैकार्थस्याभिधानं तथैव यः सर्वज्ञ इत्यादिष्विति शङ्काशयः । शङ्कामुपालभते—**अनभिधानज्ञ इति** । अभिधानमभिधा । वृत्तिरिति यावत् । तदनभिज्ञः देवानांप्रियः मूर्ख इत्यर्थः । **विशिष्टेति** । यथा शूरः सुन्दरो देवदत्त इत्यत्र शूरत्वविशिष्टस्य सुन्दरत्वविशिष्टस्य चैकत्वेऽपि शूरत्वसुन्दरत्वरूपविशेषणयोर्भेदेन शूरादिपदानामर्थभेदोऽवश्यंभावी, तथैव यः सर्वज्ञ इत्यादिष्विति एकार्थत्वाभाव इति भावः । तर्हि सत्यं ज्ञानमित्यत्र विशेषणस्यापि भेदो नास्तीति चेद्घटकुम्भशब्दवत्पर्यायतापत्तिः । ततश्चानेकशब्दोपादानमनर्थकमित्याशयेनाह—**एवं तर्हीति** । स्वाभिप्रायं स्फोटयन्नुत्तरयति—**एकार्थेति । अर्थवत्त्वं** सा-

च । एतदुक्तं भवति, लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपं, तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तपरम् । ज्ञानपदञ्चान्याधीनप्रकाशाज्जडरूपाद्वस्तुनो व्यावृत्तपरम् । अनन्तपदञ्च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम् । नच व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्म्मः अपि । तु सकलेतरविरोधि ब्रह्मैव । यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः तत्तत्पदार्थस्वरूपमेव, न धर्म्मान्तरम् । एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्य्यायञ्च पदत्रयमिति । तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतानिखिलविशेषमित्युक्तं भवति । एवं वाक्यार्थप्रतिपादने सत्येव, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिभिरैकार्थ्यम् । 'यतो वा इमानि भूतानि जायन्ते' ( तै. ३।१।१ ) 'सदेव सोम्येदमग्रआसीत्'( छां. ६।२।१ ) 'आत्मा वा इदमेक एवाग्र आसीत् '(ऐ. १।१) इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते--सत्यं ज्ञानमनन्तं ब्रह्मेति । तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्या-

---

फल्यम् । **लक्षणतः** । स्वरूपलक्षणतः । नतु तटस्थलक्षणतः । **भावरूप इति** । प्राभाकरपक्षे सिध्दान्ति-( रामानुज- ) मते च व्यावृत्तेर्भावरूपत्वं, वैशेषिकादिमते चाभावरूपत्वम् । स्वरूपस्यैव व्यावृत्तित्वे दृष्टांतमाह-**यथेति** । **इत्युक्तमिति** । सत्यज्ञानादिवाक्येनेति शेषः । सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वे कारणान्तरमाह-**एवमिति** । **इत्यादिभिः** । जगत्कारणत्वप्रतिपादकैर्वाक्यैः । **यतोवेति** । कारणवाक्येष्वेकमेवाद्वितीयमित्यादिशब्दैः सजातीयव्यावृत्ताद्वितीयब्रह्मावगतौ सत्यां तदेकवाक्यतया तादृशकारणवाक्यप्रतिपन्नब्रह्मस्वरूपशोधकस्य सत्यज्ञानादिवाक्यस्यापि सजातीयव्यावृत्ताद्वितीयवस्तुमात्रपरत्वमेवोचितमिति भावः । ननु सर्वेषु कारणवाक्येषु सजातीयव्यावृत्ताद्वितीयब्रह्मावगतिर्नास्ति । 'यतो वा' इत्यत्र तदभावादित्यत आह-**तत्र सर्वेति** । सर्वशाखासु प्रत्ययो ज्ञानमेकरूपमिति न्यायशरीरम् । तेनैकत्रोक्तस्य तत्सदृशेऽन्यत्र संग्रहो भवतीति यतो वेत्यत्रापि तदर्थावगतिरस्तीति भावः ।

वृत्तमद्वितीयं ब्रह्म अवगतम् । जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम् । अद्वितीयत्वश्रुतिर्गुणतोऽपि साद्वितीयतां न सहते । अन्यथा निरञ्जनं निर्गुणमित्यादिभिश्च विरोधः । अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति ।

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वेन लक्षणा स्यात् । नैष दोषः । अभिधानवृत्तेरपि तात्पर्य्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्य्यमितिसर्वसम्मतम् । ननु च सर्वपदानां लक्षणा न दृष्टचरी । ततः किम् । वाक्यतात्पर्य्यविरोधे सत्येकस्यापि न दृष्टा । समभिव्याहृतपदसमुदायस्यैतत्तात्पर्य्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय । तथाच शास्त्रज्ञैरभ्युपगम्यते, कार्य्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते । अपूर्वकार्य्ये एव लि-

---

ततः किमित्यत्राह–**जगदिति । प्रतिपिपादयिषितम् ।** तात्पर्यभूमिः । वस्तुमात्र एव तात्पर्यमित्यर्थः । ननु नरपतिरद्वितीय इत्यादिवत्समाभ्यधिकराहित्येप्यद्वितीयत्वमुपपन्नमिति तदैकार्थ्येऽपि न निर्गुणपरत्वसिद्धिरिति चेत्तत्राह–**अद्वितीयत्वेति । अतश्चेति ।** ब्रह्मस्वरूपलक्षणपरं सत्यंज्ञानमित्येतद्वाक्यं निर्विशेषत्वैकस्वभावमेव प्रतिपादयतीत्यर्थः ।

**स्वार्थेति ।** स्वार्थो हि विशेषणद्वारकं विशेष्यं तत्प्रहाणेनेत्यर्थः । **अभिधानेति ।** अभिधानवृत्तिः शक्तिः । तदपेक्षयापि तात्पर्यादागतवृत्तेर्बलीयस्त्वात् । तात्पर्यादागता वृत्तिश्चात्रलक्षणैव । वाक्यतात्पर्यानुगुणत्वात् । अतस्तस्या वाक्यतात्पर्याविरोधिमुख्यवृत्त्यपेक्षयापि बलीयस्त्वमिति भावः । **न दृष्टचरीति ।** क्वाप्यन्यत्र पूर्वं न दृष्टेत्यर्थः । **एकस्येवेति ।** यथा तात्पर्याविरोधायैकस्य पदस्य लक्षणायां न दोषस्तथैव द्वयोस्त्रयाणां सर्वेषां वा पदानामित्यर्थः । विरोध एव लक्षणास्वीकारे प्रयोजको नत्वेकपदत्वम् । विषं भुङ्क्ष्वेत्यादौ 'मा चास्यगृहे भुङ्क्था' इत्यर्थे सर्वपदलक्षणाया दृष्टत्वादिति भावः । अत्रार्थे संमत्यर्थं गुरुमतमाह–**तथा चेति । कार्येति ।** कार्यं कृतिसाध्यं स एव वाक्यार्थ इतिवदद्भिरित्यर्थः । तेषामयमाशयः। अपूर्वरूपं यत् कार्यं तस्मिन्नर्थे लिङादीनां मुख्यवृत्तत्वम् । शक्तिरिति यावत् । तथा च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमनामकयागविषयकं स्वर्गकामस्यापूर्वरूपं कार्यमिति

ङादेर्मुख्यवृत्तत्वात्, लिङादिभिः क्रियाकार्य्यं लक्षणया प्रतिपाद्यते। कार्य्यान्वितस्वार्थाभिधायिनाश्चेतरेषां पदानामपूर्वकार्य्यान्वित एव मुख्योऽर्थ इति क्रियाकार्य्यान्वितप्रतिपादनं लाक्षणिकमेव। अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणापि न दोषः। अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम्।

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्। सति च विरोधे बलीयस्त्वं वक्तव्यम्। विरोध एव न दृश्यते। निर्विशेषसन्मात्रग्राहित्वात्प्रत्यक्षस्य। ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्। तथैवात्र विविच्यते। कथम्। घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। नच

---

बोधः। आरोग्यकामो भेषजपानं कुर्यादित्यादिलौकिकप्रयोगे त्वपूर्वरूपवाच्यार्थस्यासंभवाल्लिङादेः क्रियाकार्येऽर्थे लक्षणेति। इतरपदानां लक्षणामुपपादयति–**कार्यान्वितेति**। अन्विताभिधानवादिनये हि घटमानयेत्यत्र घटपदस्यानयनान्वितस्वार्थे शक्तिः। तद्वदत्राप्यारोग्यकामपदस्यापूर्वरूपकार्यान्वितस्वार्थे शक्तिः। तदसंभवादारोग्यकामपदस्य क्रियाकार्यान्वितस्वार्थे लक्षणा स्वीकार्या। एवमेवेतरपदानामपि लक्षणा बोध्या। **अर्थजातमिति**। वस्तुनो निर्विशेषत्वं तस्यैव पारमार्थ्यं तद्व्यतिरिक्तस्य मिथ्यात्वं दोषपरिकल्पितत्वं च दोषस्य सदसदनिर्वचनीयत्वं ज्ञानमात्रनिवर्त्यत्वं चेत्यर्थः।

शास्त्रस्य प्रत्यक्षादिविरोधमङ्गीकृत्यापि शास्त्रस्य प्राबल्यमुक्तम्। इदानीं विरोध एव वस्तुतो नास्तीत्याह–**विरोध एव नेति**। लौकिकघटादिप्रत्यक्षेऽपि निर्विशेषं सन्मात्रं ब्रह्मैव गृह्यते इति भावः। इदमनुभवविरुद्धमित्याशयेनाशङ्कते–**ननु चेति**। **विलक्षणेति**। अयं घटोऽयं सर्प इत्यादीनां सर्वेषां ज्ञानानां घटसर्पादिभिन्नविषयकत्वाभावे एकब्रह्मविषयकत्वेन घटोयं घटोयमितिधारावाहिकज्ञानस्येव प्रवृत्तिव्यवहारहेतुत्वमेवस्यात्, सर्पोऽयं सर्पोऽयमितिधारावाहिकज्ञानस्येव निवृत्तिव्यवहारहेतुत्वमेव वा स्यादिति भावः। **तथैवेति**। यथा सन्मात्रस्यैव प्रत्यक्षत्वमेकव्यवहारहेतुतैव च स्यात्तथैवेत्यर्थः। **अस्तित्वं तद्भेदश्चेति**। घटास्तित्वं घटेतरभेदश्चेत्यर्थः। भिन्न इति व्यवहारे इव घट इति व्यवहारेपि घटस्य पटादिव्यावृत्तत्वेन प्रतीतेरिति भावः।

द्वयोरापि व्यवहारयोः प्रत्यक्षमूलत्वं सम्भवति, तयोर्भिन्नकालज्ञानफलत्वात्। प्रत्यक्षज्ञानस्यैकक्षणवर्त्तित्वात्। तत्र स्वरूपं भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः। किञ्च भेदो नाम कश्चित् पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुनः स्वरूपम्। वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्मात् भेदव्यवहारप्रसक्तेः। नच वाच्यं स्वरूपे गृहीतेऽपि भिन्न—इति व्यवहारस्य प्रतियोगिसव्यपेक्षत्वात् ततस्मरणाभावेन तदानीमेव न भेदव्यवहार इति। स्वरूपमात्रभेदवादिनो हि प्रतियोगिसव्यपेक्षा च नोत्प्रेक्षितुं क्षमा। स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः। भेदव्यवहारोऽपि तथैव स्यात्। हस्तः कर इतिवत् घटो भिन्न—इति पर्य्यायत्वञ्च स्यात्। नापि धर्मः। धर्मत्वे सति तस्य स्वरूपात् भेदोऽवश्याश्रयणीयः। अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदः तद्धर्मः तस्यापीत्यनवस्था। किञ्च जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं, भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमित्य-

---

**तयोरिति**। अस्तित्वव्यवहारप्रयोजकघटस्वरूपप्रत्यक्षानन्तरं घटेतरस्मृतौ सत्यां तादृशेतरप्रतियोगिकभेदप्रत्यक्षसंभव इति गूढाशयः। 'घटोऽस्तीत्यत्र प्रत्यक्षद्वयं जायते' इति त्वनुभवविरुद्धम्। क्षणिकैकप्रत्यक्षाङ्गीकारेऽपि तस्य स्वरूपाविषयकत्वमेव कुतः इत्याह—**तत्रेति**। गूढाशयं स्फोटयति—**भेदग्रहणस्येति**। **न्यायविद्भिः**। तत्सापातप्रतीतिमात्रतृप्तैः। **सर्वस्मादिति**। भेदस्य वस्तुस्वरूपत्वेन प्रतियोगिनिरपेक्षतया घटस्वरूपे गृहीते पटादिभ्य इव घटादपि भेदप्रसक्तेरित्यर्थः। एतदेव शंकासमाधानेन स्फुटयति—**नचेत्यादिना**। **नापीति**। यथा भेदो न वस्तुस्वरूपं तथैव वस्तुधर्मोऽपि नेत्यर्थः। **भेदे चेति**। वस्तुधर्मस्य भेदस्य वस्तुस्वरूपाद्भेदे स्वीकृते द्वितीयभेदस्य धर्मिभूतप्रथमभेदधर्मत्वं वाच्यम्। ततश्च धर्मस्य धर्मिस्वरूपाद्भेदाङ्गीकारेण प्रथमभेदप्रतियोगिकः द्वितीयभेदनिष्ठस्तृतीयभेदोऽङ्गीकार्यः। तत्रापि पूर्ववच्चतुर्थभेद इत्यनवस्थेति भावः। **भेदग्रहणे सतीति**। अगृहीते हि घटस्य पटाद्भेदेऽयं घटजातीय इति ज्ञातुमशक्यमिति भावः

न्योऽन्याश्रयणम् । अतो भेदस्यापि दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ।

किञ्च घटोऽस्ति पटोऽस्ति घटोऽनुभूयते पटोऽनुभूयतइति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते । अत्र सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्त्तमानं दृश्यत इति तदेव परमार्थः । विशेषास्तु व्यावर्त्तमानतया अपरमार्थाः रज्जुसर्पादिवत् । यथा रज्जुरधिष्ठानतयाऽनुवर्त्तमाना सती परमार्था । व्यावर्त्तमानाः सर्पभूदलनाम्बुधारादयोऽपरमार्थाः । ननु च रज्जुसर्पादौ रज्जुरियं न सर्प इत्यादि—रज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात् सर्पादेरपारमार्थ्यं न व्यावर्तमानत्वात् । रज्ज्वादेरपि पारमार्थ्यं नानुवर्त्तमानतया, किन्त्वबाधितत्वात् । अत्र तु अबाधितानां घटादीनां कथमपारमार्थ्यम् । उच्यते । घटादौ दृष्टा व्यावृत्तिः सा किंरूपेति विवेचनीयम् । किं घटोऽस्तीत्यत्र पटाभावः। सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम् । अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः । सा व्यावर्त्तमानानामपारमार्थ्यं साधयति । रज्जुवत् सन्मात्रमबाधितमनुवर्त्तते । तस्मात् सन्मात्रातिरेकि सर्वमपरमार्थम् । प्रयोगश्च भवति । सत् परमार्थमनुवर्तमानत्वात् रज्जुसर्पादौ रज्वादिवत् । घटादयोऽपरमार्थाः व्यावर्त्तमानत्वात् रज्ज्वाद्यधिष्ठानसर्पादिवदिति ।

---

सदनुभूत्योरेकत्वं वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति—**घटोऽनुभूयत इत्यादिना । तदेव** । न तु भेदप्रतीतिजनका घटाद्याकाराः **विशेषाः** भेदाः । **व्यावर्तमानतया** । उत्तरोत्तरप्रतीतिविषयेष्वविद्यमानतया । **सर्पेति** । रज्जौ स्थितायां कदाचिदयं सर्प इति भ्रमो भवति । कदाचिदत्र भूमिर्द्विधा भग्नेति भ्रमो भवति । कदाचिदियमम्बुधारा वहतीति भ्रमो भवति । **सर्पादेरिति** । इदं मध्यमणिन्यायेनोभयान्वयि । **अनुवर्तमानतया** । उत्तरोत्तरप्रतीतिविषयेषु विद्यमानतया । मिथ्यात्वे बाधितत्वं हेतुः सत्यत्वे चाबाधितत्वमिति शङ्काशयः । **घटादाविति** । घटपटादौ पटघटादिव्यावृत्तेस्तत्रापि सम्मतत्वेन तस्याश्चाभावरूपत्वेन चालनीन्यायेन पटादीनां सर्वेषां बाधितत्वात्तेषामपारमार्थ्यं तत्रापि गले पतितमित्युत्तराशयः । **प्रयोगः** । अनुमानप्रयोगः । **सदिति** । पक्षनिर्देशः । **परमार्थमिति** । साध्यनिर्देशः ।

एवं सत्यनुवर्त्तमानानुभूतिरेव परमार्था । सैव सती । ननु च सन्मात्रमनुभतेर्विषयतया ततो भिन्नम् । नैवम् । भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव ( पृ० ३९ पं ४ ) निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति । तस्मात् सदनुभूतिरेव । सा च स्वतःसिद्धा । अनुभूतित्वात् । अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः । किञ्चानुभवान्तरापेक्षा चानुभूतेर्न शक्या कल्पयितुम् । स्वसत्तयैव प्रकाशमानत्वात् । नह्यनुभूतिर्वर्त्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाभ्युपगम्येत । अथैवं मनुषे, उत्पन्नायामप्यनुभुतौ विषयमातमवभासते घटोऽनुभूयत–इति । नहि कश्चिद्घटोऽयमिति जानंस्तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति । तस्माद्घटादिप्रकाशनिष्पत्तो

शङ्करमतानुसारिणो मायावेदान्तिनो हि केवलज्ञानस्यैव परमार्थत्वं वदन्ति । तदत्र तन्मते प्रस्तुते कथं सतः परमार्थत्वसाधनमित्यत्राह–**एवं सतीति** । **सैव सतीति** । सदनुभूत्योरेकत्वादिति भावः । **विषयतयेति** । घटतज्ज्ञानयोर्विषयविषयिणोर्भेदस्य प्रत्यक्षसिद्धत्वादित्याशयः । **निरस्त इति** । न चैवं घटपटयोरपि भेदो न स्यादिति वाच्यम् । घटपटयोर्वस्तुतोऽपरमार्थत्वेन तद्भेदकथाप्रसङ्गस्यैवाभावात् । **अतएव** । भेदस्य निरस्तत्वादेव । भेदमूलिका हि विषयविषयिभावकल्पनेति भावः । **अनुभूतिविषयभावः** । अनुभवनिष्ठविषयितानिरूपितविषयत्वम् । ननु ज्ञानभिन्नस्य सर्वस्यापरमार्थत्वे ज्ञानस्य ग्राहकाभावात्तस्यापि शून्यत्वं स्यादित्यत आह–**साचेति** । यथा ग्राह्यत्वं ग्राहकत्वं चेति शक्तिद्वयं तेजसस्तथैव ज्ञानस्येत्यर्थः । **सत्तयैवेति** । यथा दीपः सत्तयैव प्रकाशते तद्वदेव ज्ञानं सत्तयैव प्रकाशते इति भावः । एतदसहमानः शङ्कते–**अथैवमित्यादिना स्वात्मस्पर्शवदशक्यत्वादितीत्यन्तेन** । यदि ज्ञानं स्वप्रकाशं स्यात्तर्हि घटादिवत्तस्यापि सर्वत्रावभासोऽवश्यम्भावी । स तु न भवति । न हि यदा घटोऽयमिति जानाति तदानीं ' घटोऽनुभूयते ' इति जानाति कश्चिदिति ज्ञानस्य स्वप्रकाशत्वं नास्तीत्याशयः । **अविषयभूताम्** । घटशब्दार्थव्यतिरिक्ताम् । घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः । **अनिदम्भावाम्** । अयंशब्दार्थव्यतिरिक्ताम् । सन्निहितदेशवर्तमानकालविशिष्टत्वमिदंशब्दार्थः । एतदुभयव्यतिरिक्तो ह्यनुभवः । स तु घटोऽयमित्यनुभववेलायां नानुभूयत इत्यर्थः । ननु यद्यनुभवो नानुभूयते तर्हि तस्य घटादिप्रकाशकत्वं नस्यात् । न ह्यज्ञातस्य शब्दस्यार्थप्रकाशकत्वं दृष्टमिति चेत्तत्राह–**तस्मादिति** । प्रकाशकं हि क्वचित्स्वयमज्ञातमपि सत्तयैव केवलमर्थ

चक्षुरादिकरणसन्निकर्षवदनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते । एवं तर्हि, अनुभूतेरजडाया अर्थवज्जडत्वमापद्येत—इति चेत् । किमिदमजडत्वं नाम । न तावत् स्वसत्तायाः प्रकाशाव्यभिचारः । सुखादिष्वप्येतत्सम्भवात् । न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते । अतोऽनुभूतिः स्वयमेव नानुभूयते । अर्थान्तरं स्पृशतोप्यङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति । तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम् । अनुभूतिव्यतिरेकिणो विषयधर्म्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः । उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यार्थधर्मकल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते । नापि ज्ञा-

---

प्रकाशयति । यथेन्द्रियाणि तेषां सन्निकर्षश्च, तथैवात्रेति भावः । ननु यद्यनुभवस्य प्रकाश्यत्वं नास्ति तर्हि किं तत्सद्भावे प्रमाणमतमाह—**तदनन्तरमिति** । घटादिविषयगतप्रकाशातिशयस्य कादाचित्कत्वात्कार्यत्वं कार्यत्वाच्च सहेतुकत्वमित्यनुमानेनानुभवो ज्ञायत इत्यर्थः । **एवं तर्हि** । अनुभवस्य न स्वप्रकाशत्वं किंत्वनुमानेन परप्रकाश्यत्वमेवेत्यङ्गीकारे । **सत्तायाः प्रकाशाव्यभिचारः** । विद्यमानदशायां सर्वदाऽनुभूयमानत्वम् । **सुखादिष्विति** । यदि ज्ञानस्य विद्यमानदशायामप्यनुभूयमानत्वाभावेन जडत्वमापद्यते तर्हि सुखादीनां विद्यमानदशायां सर्वदाऽनुभूयमानत्वेनाजडत्वमापद्येत । तच्चानिष्टम् । तथा च न तदजडत्वे तन्त्रमिति भावः । ननु स्वप्रकाशत्वमजडत्वम् । ज्ञानस्य च परप्रकाश्यत्वेन जडत्वापत्तिरित्युच्यते चेदीदृशजडत्वमिष्टमेवेत्याह—**अत इति** । यथाहुः ' अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति । स्वांशेन, ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ' इति । स्वप्रकाशत्ववाद्युत्तरयति—**तदिदमिति** । **अनाकलितानुभवविभवस्य** । अनुभवमाहात्म्यमजानतः । माहात्म्यं चायमनुभवः स्वातिरिक्तसर्वप्रकाशकः सन्स्वस्मिन्ननन्यापेक्षः । तथाऽयमेवानुभवः ' प्रकाशते ' इति व्यवहारहेतुः, नत्वेतद्भिन्नः कश्चन प्रकाशाख्यो विषयधर्मोऽस्तीत्येवंरूपं बोध्यम् । **अनुभूतीति** । येन घटादिविषयगतप्रकाशरूपलिङ्गेनानुभवोऽनुमीयते सोऽनुभवभिन्नत्वेन त्वदभिमतः प्रकाशः प्रत्यक्षयोग्यो न वा । नाद्य इत्याह—**अनुभूतिव्यतिरेकिण इति** । अनुभवभिन्नस्येत्यर्थः । **रूपादिवदिति** । वैधर्म्येण दृष्टान्तः । नान्त्यः । अप्रत्यक्षेण हेतुनाऽनुमानासंभवात् । तथा च प्रकाशरूपस्यानुभवस्य स्वप्रकाशत्वमेवागत्या स्वीकार्यमिति भावः । नन्वनुभूतेः सुखादिवन्मानसप्रत्यक्षवेद्यत्वमस्त्वित्यत आह—**नापीति** । तथात्वे हि सति

नान्तरसिद्धा। अपि तु, सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति। प्रयोगश्च। अनुभूतिरनन्याधीनस्वधर्म्मव्यवहारा स्वसम्बन्धादर्थान्तरे तद्धर्म्मव्यवहारहेतुत्वात्। यः स्वसम्बन्धादर्थान्तरे तद्धर्म्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः। यथा रूपादिश्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ। अतोऽनुभूतिरात्मनः प्रकाशमानत्वे, प्रकाशत–इति व्यवहारे च स्वयमेव हेतुः। सेयं स्वयंप्रकाशानुभूतिर्नित्या च, प्रागभावाद्यभावात्। तदभावश्च स्वतःसिद्धत्वादेव। नह्यनुभूतेः स्वतःसिद्धायाः प्रागभावः स्वतोऽन्यतो वावगन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती सती तावन्नावगमयति। तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं स्वाभावमवगमयति। एवमसत्यपि नावगमयति। अनुभूतिः स्वयमसती कथं स्वाभावे प्रमाणं भवेत्। नाप्यन्यतो-

---

नस्यापि मानसप्रत्यक्षस्यान्यमानसप्रत्यक्षग्राह्यत्वमित्येवमनवस्था स्यादिति भावः। अथ स्वयंप्रकाशत्वेऽनुमानमाह–**प्रयोगश्चेति**। **अनुभूतिरिति**। अनुभवः पक्षः। अनन्याधीनस्वधर्मत्वम्, अनन्याधीनस्वव्यवहारत्वं चेति साध्यद्वयम्। स्वसंबंधादर्थान्तरे तद्धर्महेतुत्वं, स्वसंबंधादर्थान्तरे तद्व्यवहारहेतुत्वं चेति क्रमेण हेतुद्वयम्। अनुभूतेः स्वधर्मः प्रकाशमानत्वम्। तच्च नान्याधीनम्। अनुभूतिसंबन्धेनैव घटादौ प्रकाशमानत्वरूपधर्मदर्शनेनानुभूतेस्तादृशधर्महेतुत्वात्। यथा रूपम्। तत्र हि रूपसंबंधेनैव घटादौ चाक्षुषत्वधर्मदर्शनेन रूपस्य तादृशधर्महेतुत्वं, स्वगतचाक्षुषत्वे च तस्य रूपस्यान्यरूपानधीनत्वं दृश्यते। एवमनुभूतेः स्वव्यवहारः 'प्रकाशते' इति। तत्रापि पूर्ववद्बोध्यम्। **तयोः**। धर्मव्यवहारयोः। **स्वस्मिन्निति**। अस्य चाक्षुषत्वादावित्यत्रान्वयः। रूपादिः स्वगतचाक्षुषत्वादावन्यरूपादिसंबन्धाधीनो नेत्यर्थः। अथ ज्ञातृज्ञेयनिरसनं ज्ञानस्य स्वप्रकाशत्वं च बौद्धपक्षेऽपि समानमिति तद्व्यावर्तकं ज्ञानस्य नित्यत्वं साधयति–**सेयमिति**। स्वयंप्रकाशेति हेतुगर्भं विशेषणम्। स्वयंप्रकाशत्वस्य नित्यत्वव्याप्यत्वात्। **स्वतःसिद्धत्वादेव**। स्वयंप्रकाशत्वादेव। **नहीति**। अनुभूतेः प्रागभावोऽनुभूत्यैवावगम्यतेऽन्येन साधनेन वा। प्रथमेऽपि विद्यमानयाऽनुभूत्याऽविद्यमानया वा। आद्ये आह–**अनुभूतिरिति**। **सती**। विद्यमाना। न हि विद्यमानं वस्तु तदानीमेव स्वाभावं बोधयतीति भावः। अन्त्ये आह–**एवमिति**। **असती**। अविद्यमाना। न ह्यविद्यमानं वस्तु कस्यापि ग्राहकं भवतीति भावः। द्वितीये आह–**नापीति**। यथा रूपग्राहकमेव चक्षुस्तदभावं ग्राहयति। न हि रूपाग्राहिणा

ऽवगन्तुं शक्यते। अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणमनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत्। स्वतःसिद्धत्वेनेयमिति विषयीकारानर्हत्वात् तत्प्रागभावो नान्यतः शक्यावगमः। अतोऽस्याः प्रागभावाद्यभावादुत्पत्तिर्न शक्यते वक्तुमिति। उत्पत्तिप्रतिबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति। अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते। व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्म्मत्वं न सम्भवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्म्मः। यतो निर्धूतनिखिलभेदा संवित् अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्ती-

---

श्रोत्रेण क्वचिदपि रूपाभावो गृह्यते। तथात्रानुभूत्यभावग्राहकं साधनमनुभूतिग्राहकमस्त्येवेति वक्तव्यम्। तच्च पुरस्तादेव (पृ. ४३ पं. २) निराकृतमिति भावः। तदेवाह–**अस्या इति**। ननूत्पत्त्यभावेऽपि प्रागभावस्यैवानुभूतेरनित्यत्वं स्यादत आह–**उत्पत्तिप्रतिबद्धा इति**। उत्पत्तिसापेक्षा इत्यर्थः। 'उत्पत्तिप्रतिबन्धात्' इति पाठे उत्पत्त्यभावादित्यर्थः। **भावविकाराः**। जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंरूपाः षड् भावविकाराः। तत्रानुभूतौ प्रथमस्यैवाभावेनान्येऽपि न सन्तीत्यर्थः। प्रागभावे तु नैवम्। तस्याभावरूपत्वात्। एतेषां च भावविकारत्वात्। अथ बौद्धाभिमतमनुभूत्यनेकत्वं खण्डयति–**अनुत्पन्नेति**। **आत्मनि**। अनुभूतौ। **व्यापकेति**। नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः। **न हीति**। मायावेदान्तिनां मते ब्रह्मव्यतिरिक्तस्य सर्वस्यासत्वेन न परमाणुषु व्यभिचारः। **भेदादीनामिति**। अनुभूतेर्नानात्वे हि तास्वनुभूतिषु मिथो भेदोऽवश्यं वाच्यः। स च न संभवति। रूपादीनामिव भेदस्याप्यनुभाव्यत्वेन तस्यानुभूतिधर्मत्वाभावात्। तथा च प्रयोगः। भेदादयो नानुभूतिधर्माः। अनुभाव्यत्वात्। रूपादिवदिति। **अन्योऽपि**। नित्यत्वैकत्वस्वयंप्रकाशत्वादिरपि धर्मो नास्तीत्यर्थः। पूर्वत्र तथोक्तिस्तु अनित्यत्वनानात्वपरप्रकाश्यत्वादिविरुद्धधर्मनिरासायैव। न तु तस्यास्तत्र नित्यत्वादिधर्मविधौ तात्पर्यमिति बोध्यम्। **यत इति**। सकलभेदनिषेधेन विजातीयभेदोऽपि निषिद्ध इति विजातीयभेदप्रतियो[illegible]त्वेन पराभिमतस्य ज्ञातुर्मिथ्यात्वेन न स आत्मा। अपि तु परम[illegible]र्थमनाऽनुभूतिरेवात्मा। ए[illegible] [illegible] च 'आत्मा आत्मा' इति यो लोके गीयते सोऽनुभू-

ति स्वप्रकाशरूपा सैवात्मा । अजडत्वाच्च । अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्त्तमानमनात्मत्वमपिहि संविदो व्यावर्त्तयति ।

ननु चाहं जानामीति ज्ञातृता प्रतीतिसिद्धा । मैवम् । सा भ्रान्तिसिद्धा । रजततेव शुक्तिशकलस्य । अनुभूतेः स्वात्मनि कर्तृत्वायोगात् । अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तम् । ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम् । तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव सम्भवति । दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्म्मत्वम् । सुषुप्तिमूर्छादावहंप्रत्ययाभावेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम् । कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वा-

---

तिस्वरूप एव नानुभूत्याश्रय इति भावः । तत्रैव हेत्वन्तरमाह–**अजडत्वाच्चेति** । **व्याप्तमिति** । कर्तरिक्तः । अनात्मत्वस्य व्यापकमित्यर्थः । तथा चानुभूतौ व्यापकस्य जडत्वस्याभावाद्व्याप्यस्यानात्मत्वस्याप्यभाव इत्यात्मत्वं सिद्धमित्यर्थः । **संविदि** । अनुभूतौ ।

**प्रतीतिसिद्धेति** । तथा च ज्ञातुर्मिथ्यात्वं न संभवतीति भावः । किमनुभूतिस्वरूपस्यात्मनो ज्ञातृत्वं ब्रूषेऽनुभूतिव्यतिरिक्तस्य वा । नाद्य इत्याह–**अनुभूतेरिति** । **स्वात्मनि** । अनुभूतौ । स्वनिरूपितकर्तृत्वस्य स्वस्मिन्नेवासंभवादिति भावः । नान्त्यः । अनुभूतिव्यतिरिक्तस्यात्मनः प्रागेव निरस्तत्वात् । पक्षद्वयेऽपि कर्तृत्वायोगमुपपादयति –**ज्ञातृत्वं हीति** । **विक्रियात्मकमिति** । क्रियाया उत्पत्तिविनाशयोगात्तदाश्रयत्वमपि कादाचित्कमिति तद्विकाररूपमित्यर्थः । **जडं** ज्ञेयम् । अत एव विकारिद्रव्याहङ्कारग्रन्थिस्थम् । अहंकारस्यापि विकारित्वाज्ज्ञेयत्वाच्च । द्रव्यशब्देन ज्ञेयत्वं सूच्यते । द्रव्यत्वस्य ज्ञेयत्वव्याप्यत्वात् । आत्मनश्च द्रव्यत्वानभ्युपगमात् । **साक्षिणीति** । साक्षित्वं च न ज्ञातृत्वम् । किं तु अविद्यानुभवस्वरूपत्वमेव । **चिन्मात्रात्मनि** । स्वयंप्रकाशे । **दृशीति** । दृशिक्रियाधीना सिद्धिर्यस्य तत्वादित्यर्थः । अनेन ‘ कर्तृत्वादिर्नात्मधर्मः दृशिक्रियाधीनसिद्धित्वात् रूपादिवत्’ इत्यनुमानं दर्शितम् । अहमर्थो ह्यात्मा । तेन समानाधिकरणतया प्रतीतो ज्ञाता आत्मा स्यादित्यत्राह–**सुषुप्तीति** । **अहंप्रत्ययाभावे इति** । ‘ नाहं खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति ’ ( छां. ८।११।१ ) इति श्रुतेरिति भावः । **जडत्वेति** । जडत्वं ज्ञेयत्वम् । पराक्त्वं

नात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धाद्देहात् क्रियाफलस्य स्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव। तथाहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम्। एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति। आत्मस्थतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाभिव्यनक्ति। तत्कृतोऽयं जानाम्यहमिति भ्रमः। स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः। रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वोपदर्शनात्। जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः। यतोऽहं जानामीति ज्ञातायमहमर्थः चिन्मात्रात्मनो न पारमार्थिको धर्म्मः, अत एव सुषुप्तिमुक्त्योर्नान्वेति। तत्र ह्यहमुल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणात्मावभासते। अत एव सुप्तोत्थितः कदाचिन्मामप्यहं न ज्ञातवानिति परामृशति। तस्मात् परमार्थतो निरस्तसमस्तभेदविकल्पनिर्वि-

---

परस्मै भासमानत्वम्। आत्मत्वं देहनियन्तृत्वेन व्यापकत्वम्। तदभावोऽनात्मत्वम्। आदिशब्देन क्षयिष्णुत्वादिसंग्रहः। जडत्वादिप्रसङ्गस्येष्टापत्तिं परिहरति—**अहंप्रत्ययेति। तत्क्रियाफलस्य**। देहकृतयागादिक्रियाफलभूतस्य। **प्रामाणिकानाम्**। चार्वाकातिरिक्तानाम्। स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवात्मा स्यादित्यत्राह—**तथेति**। आत्मा हि शरीरातिरिक्तत्वेन प्रमाणबलादभ्युपगम्यते, तथा ज्ञातृव्यतिरिक्तत्वेनापि प्रमाणबलात्स्वीकार्यः। अहं जानामीति प्रत्ययस्तु भ्रम एवेति भावः। तत्र हेतुमाह—**एवमिति। स्वाश्रयतया**। स्वमाश्रयो यस्य तत्त्वेन। अहङ्कारः ज्ञानस्वरूपमात्मानं स्वनिष्ठत्वेनाभिव्यनक्तीत्यर्थः। **आत्मस्थतयेति**। अभिव्यञ्जकानामयं स्वभावो यदभिव्यङ्ग्यपदार्थानां स्वनिष्ठत्वेनाभिव्यञ्जनम्। यथा दर्पणादिः स्वनिष्ठत्वेनैव मुखादीनभिव्यनक्ति। तथाऽहङ्कारोऽपि स्वनिष्ठत्वेनैव ज्ञानस्वरूपमात्मानमभिव्यनक्ति। अतश्च युक्तोऽयं भ्रम इति भावः। गवादिसमुदायः खण्डपदार्थः। **स्वप्रकाशाया इति**। अनुभूतेः स्वप्रकाशत्वेन कथमितराभिव्यङ्ग्यत्वम्। कथं च जडस्याहङ्कारस्येतराभिव्यञ्जकत्वम्। कथंतरामनुभूत्याभिव्यङ्ग्यस्याहङ्कारस्य स्वाभिव्यञ्जकानुभूतिव्यञ्जकत्वमित्याशयः। करतलस्य किरणाभिव्यञ्जकत्वं क्व दृष्टमित्यत्राह—**जालकेति**। एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम्। एतदेव परमार्थवस्तुभासनवेलायां ज्ञातृत्वानवभासप्रदर्शनेन द्रढयति—**यत इति**। महापूर्वपक्षमुपसंहरति—**तस्मादिति**

शेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्त्तत–इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त–इति ।

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततत्तदितिकर्त्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतवाक्यप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् । तथाहि । निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम् । सविशेषवस्तुविषयत्वात्

---

कूटस्थत्वं निर्विकारत्वं सर्वाधिष्ठानत्वं वा । शुद्धमविद्यारहितम् । बुद्धं स्वयंप्रकाशम् । मुक्तं परमार्थतो भेददर्शनजन्मादिरहितम् । एवंविधब्रह्मात्मैकत्वज्ञानाय सर्वे वेदान्ता आरभ्यन्ते इत्यर्थः ।

अथ महापूर्वपक्षं खण्डयितुं सिद्धान्ती प्रतिजानीते–**तदिदमिति** । उपनिषत्प्रतिपादितः परमात्मा भक्तं वृणुते बुद्धियोगं ददाति तादृशवरणस्य हेतुभूताः ये भक्त्यादयो विशेषगुणास्तद्रहितानामित्यर्थः । मायावादिनो भक्तिरहिता इत्यभिप्रायः । तत्र हेतुगर्भं विशेषणमाह–**अनादीति** । **शेमुषी** । मोक्षोपयोगि ज्ञानम् । दूषितशेमुषीफलं सम्यग्ज्ञानाभावमाह–**अनधिगतेति** । प्रकृतिप्रत्ययोगेन पदत्वमिति पदस्वरूपम् । अनेकपदार्थसंसर्गविशेषाभिधायित्वं वाक्यस्वरूपम् । तदर्थयाथात्म्यं पदार्थवाक्यार्थतात्पर्यविषयत्वम् । प्रत्यक्षादिसकलप्रमाणैर्वृत्तं बोधनम् । आदिशब्देनानुमानादिसंग्रहः । सकलशब्देन प्रत्यक्षादिव्याप्यानां चाक्षुषादीनां संग्रहः । तेभ्यः प्रमाणेभ्य इति कर्तव्यतायाः रूपं स्वरूपनिश्चयः । समीचीनन्यायमार्गः समीचीनस्तत्तन्न्यायसंचारविषयः । एतत्सर्वमनधिगतमज्ञातं यैस्तेषामित्यर्थः । तर्हि कथं तैर्मायावादिभिर्ग्रन्थाः कृता इत्यत्राह–**विकल्पेति** । विविधा ये कुतर्काः प्रमाणविरुद्धाः मूलशैथिल्यमिथोविरोधादिदोषाक्रान्ताश्च तर्काः ते च विकल्पासहाः एवं वैवं वेति विचार्यमाणे सद्यो विनाशिन इत्यर्थः । ते एव कल्कमसारभूतं कुतर्ककल्पनापटुभिर्बौद्धैरात्तसारं कल्कजीवमित्यर्थः । इतिर्हेतौ । **सविशेषेति** । विशेषरहितस्य वस्तुनो रूपाद्यभावान्न तत्र प्रत्यक्षं क्रमते । नापीतरप्रमाणानि । प्रत्यक्षमूलकत्वात्तेषाम् । ननु विशेषाणां विशेषरहितत्वान्न तेषां प्रमाणविषयत्वम् । विशेषानवगमाच्च सविशेषवस्तुन्यपि न प्र-

सर्वप्रमाणानाम् । यस्तु, स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः। इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद् युक्त्याभासेन निर्विशेष—इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्क्रष्टव्य—इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त—इति न क्वाचिन्निर्विशेषवस्तुसिद्धिः । धियो हि धीत्वं, स्वयंप्रकाशता च । ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमदमूर्छासु च सविशेष एवानुभव—इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च

---

माणप्रवृत्तिः स्यादिति चेन्न । विशेषाणामाश्रयद्वारा सविशेषत्वात् । एवं च यद्वस्तु कस्यचिद्धर्मभूतं कस्यचिद्धर्मिभूतं वा न भवति तत्प्रमाणशून्यमिति फलितम् । अतो मायावादिनां मते ब्रह्मणस्तथात्वापत्तिर्दोष इति भावः । ननु न वयं प्रमाणान्तरेण निर्विशेषवस्तुसिद्धिमभ्युपगच्छामः । किंतु स्वानुभवसिद्धमेव तदिति चेत्तत्राह—**यस्त्विति** । **स्वेति** । स्वगोष्ठीषु स्थितः सङ्केत इत्यर्थः । अनेन परवाद्यसंमतत्वं ध्वन्यते । आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति—**इदमहमिति** । इदमित्यनेनानुभवस्य कर्मरूपविशेषवत्वं, अहमित्यनेन कर्तृरूपविशेषवत्वं, अदर्शमित्यनेनापरोक्षत्वातीतत्वरूपविशेषवत्वं च दर्शितम् । ननु न वयमिदमहमदर्शमिति प्रतीतिमपलपामः । किंतु सा तर्कव्यवस्थापितविषया निर्विशेषे प्रमाणमिति चेत्तत्राह—**सविशेषोऽपीति** । **स्वभावविशेषैः** । धर्मविशेषैः । निर्विशेषवस्तुवादिनस्तव निर्विशेषत्वसाधकत्वेनाभिमता धर्मा अवर्जनीया एवेति भावः । **कैश्चिद्विशेषैः** । स्वासाधारणैः प्रामाणिकैर्धर्मैः । **अन्ये विशेषाः** । अप्रामाणिका रूपादयो धर्माः । न तु सर्वे धर्माः । यथाऽग्न्यभाववद्वृत्तिर्धूमः पर्वतादावग्न्यभावमेव निवर्तयति न तु स्वं नाप्याकारान्तरं तद्वदिति भावः । किं च त्वदङ्गीकृतैर्धीत्वादिधर्मैरपि ज्ञानस्य सविशेषत्वमेव सिध्यतीत्याह—**धिय इति** । धीत्वं विषयप्रकाशकत्वं साधनतया त्वयोपन्यस्तम् । स्वप्रकाशतारूपधर्मश्च साध्यतयोपन्यस्तः । **ज्ञातुरिति** । ज्ञातुर्यत् विषयप्रकाशनं अयमेव धियः स्वभाव इत्यर्थः । ननु नोक्तधर्मविशिष्टस्य लौकिकज्ञानस्य निर्विशेषत्वं वदामः । किं तु स्वापाद्यवस्थास्वनुभूतस्यात्मभूतस्यैवेति चेत्तत्राह—**स्वापेति** । **अनुभवः** । आत्मस्फुरणम् । **स्वावसरे** । अहमर्थस्यैवात्मत्वसमर्थने । **निपुणतरम्** ।

नित्यत्वादयो ह्यनेकविशेषाः सन्त्येव । ते च न वस्तुमात्रमिति शक्योपपादनाः । वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात् । स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ।

शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम् । पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वम् । प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्ज्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः । पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम् ।

---

परदर्शितयुक्त्यैव । तत्र ‘ सुखमहमस्वाप्सं मामप्यहं न ज्ञातवान् ’ इति त्वद्दर्शिताकार एव विशेष इति भावः । किं चाहमिति भासमानस्यात्मस्वरूपभूतज्ञानस्य प्रत्यक्त्वादिधर्मैः सविशेषत्वमग्रे वक्ष्यते । **नित्यत्वादय इति** । आदिपदेन स्वयंप्रकाशत्वैकत्वानन्दत्वादिधर्मसंग्रहः । **न शक्योपपादनाः** । वक्तुमशक्याः । **विधाभेदः** । प्रकारभेदः । **स्वाभिमतेति** । बौद्धैरात्मनः क्षणिकत्वमुक्तं त्वया तु नित्यत्वम् । वैशेषिकादिभिश्च जडत्वं बहुत्वं चोक्तं त्वया तु स्वप्रकाशत्वमेकत्वं च । तथा च तैस्सह विवदता त्वया तद्विरुद्धमात्मनि किंचित्साध्यते न वा । आद्ये यत्साध्यते तेनैवात्मनः सविशेषत्वम् । द्वितीये तव केवलं बहुप्रलापित्वापत्तिः । निर्विशेषत्वमेव साध्यते चेन्निर्विशेषत्वरूपधर्मेणैव सविशेषत्वं दुर्वारमिति भावः ।

अथ पूर्वप्रतिज्ञातं प्रमाणानां सविशेषविषयत्वं वक्तुमारभते–**शब्दस्येति** । शब्दस्य हि द्विधा प्रवृत्तिः । पदरूपेण वाक्यरूपेण च । तत्राद्यां विवृणोति–**प्रकृतीति** । यथा पाचक इत्यत्र पच् इति प्रकृतेः पचनमर्थः । ण्वुल्प्रत्ययस्य च कर्तृरूपोर्थः । तयोः संबंधेन पाचकशब्दात्पचनकर्तृत्वं यद् बुध्यते स एव विशेष इति सविशेषमेव वस्तु पाचकशब्देनाभिधीयते । **पदस्यैवेति** । आदौ पदमेव सविशेषवस्तुप्रतिपादकं भवति किमुत वाक्यमित्यनेन सूच्यते । द्वितीयां विवृणोति–**पदभेद इति** । तत्तत्पदार्थसंसर्गो हि वाक्यार्थ इति सविशेषमेव वस्तु वाक्येन प्रतिपाद्यते इति भावः ।

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव। सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात्। निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणं,न सर्वविशेषरहितस्य। तथाभूतस्य कदाचिदपि ग्रहणादर्शनात। अनुपपत्तेश्च। केनचिद्विशेषेण इदमित्थमिति हि सर्वा प्रतीतिरुपजायते। त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्। अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्। द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते। तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते। दितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः। प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्म्मविशिष्टत्वं द्वितीयादिपिण्डग्र-

---

प्रत्यक्षप्रमाणस्य सविशेषविषयत्वं दर्शयति–**प्रत्यक्षस्येति। स्वस्मिन्निति**। स्वस्मिन्निर्विकल्पकेऽनुभूतो यो घटत्वादिपदार्थस्तद्विशिष्टघटादेः सविकल्पके यदनुसंधानं भवति तद्धेतुत्वं निर्विकल्पकस्येत्यर्थः। तथा च यद्याश्रयद्वारापि निर्विशेषं ( निर्धर्मिकं ) वस्तु निर्विकल्पकज्ञानविषयो भवेत्तर्हि कथं तद्विशिष्टत्वेन सविकल्पके प्रतिसंधानं भवेत्। अथ निर्विशेषमित्यस्य निर्धर्मकमित्येवार्थस्तथापि दोष एव। निर्विकल्पकज्ञानविषयीभूतं घटत्वाद्यपि इदमित्थमित्याकारेणैव तत्र तत्र प्रतीयते इति सविशेषमेव तत्। निर्धर्मके वस्तुनीत्थंताया असम्भवात्। इदं किंचिदिति निर्विकल्पकज्ञानविषयीभूतमपि वस्तु सविशेषमेव। विशेषरहितस्येदंतया बोधासंभवात्। **त्रिकोणं** गोमुखम्। **सास्ना** गोगलकम्बलः। **संस्थानम**वयवरचना। ननु निर्विकल्पकेऽपि सविकल्पकवत्त्रिकोणसास्नादिसंस्थानविशेषप्रतीतौ किं तयोर्भेदकमिति चेत्तत्राह–**अत इति**। अनेकगोव्यक्तिषुमध्ये प्रथमत एव गोव्यक्तेर्यत् ज्ञानं जायते तन्निर्विकल्पकम्। तत्र त्रिकोणसास्नादिसंस्थानरूपगोत्वस्य ज्ञानेपि तस्य गोत्वस्यानुवृत्तत्वेन तत्र ज्ञानाभावात्। अनुवृत्तत्वं चैकरूपेणानेकत्रावस्थितत्वम्। तदनन्तरं गोव्यक्तेर्यत् ज्ञानं जायते तत्सविकल्पकम्। तदानीं तादृशगोत्वस्यानुवृत्तत्वेन ज्ञातत्वात्। अनुवृत्तत्वेन ज्ञाने च प्राथमिकज्ञानजन्यसंस्कारस्य हेतुत्वात्। एवं च गोत्वादेरनुवृत्तत्वेन प्रतीतिरेव सविकल्पकशब्दप्रवृत्तिनिमित्तम्, तस्य तत्त्वेनाप्रतीतिरेव च निर्विकल्पकशब्दप्रवृत्तिनिमित्तमिति बोध्यम्। **पिण्डः**। व्यक्तिः।

हणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम् । सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिः न प्रथमपिण्डग्रहणे गृह्यत—इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम् । न पुनः संस्थानरूपजात्यादेरग्रहणात् । संस्थानरूपजात्यादेरपि ऐन्द्रियकत्वाविशेषात् । संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते । अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्म्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यत—इति तेषु सविकल्पकत्वमेव । अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ।

अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थमिति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते । अत्रेत्थंभावः सास्नादिसंस्थानविशेषस्तद्विशेष्यं द्रव्यमिदमंश—इत्यनयोरैक्यं प्रतीतिपराहतमेव । तथाहि । प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया इदमित्थमिति प्रतीतिः ।

---

**ऐन्द्रियकत्वाविशेषादिति** । ऐन्द्रियकत्वमिन्द्रियजन्यज्ञानविषयत्वम् । एवं च निर्विकल्पके गोव्यक्तेरिव गोत्वजातेरपि ग्रहणं दुर्वारमितिभावः । **संस्थानिवदिति** । यथा संस्थानिरूपा व्यक्तिः सर्वज्ञानेषु गृह्यते यथा वा व्यक्तिधर्मः संस्थानं सर्वज्ञानेषु गृह्यते तथैवानुवृत्तिरूपः संस्थानधर्मोऽपि द्वितीयादिसर्वज्ञानेषु गृह्यत एवेत्यर्थः ।

प्रसंगाद्भेदाभेदवादं निराकरोति—**अत एवेति** । **सर्वत्रेति** । सजातीयव्यक्तिद्वयमध्ये जातिव्यक्तिमध्ये गुणगुणिमध्ये क्रियातदाश्रयमध्ये कार्यकारणमध्ये चेत्यर्थः । व्यक्तिद्वयमध्ये जात्यात्मनाऽभेदो व्यक्त्यात्मना च भेदः । न चाभेदस्य जातिनिष्ठत्वाद्व्यक्त्योरभेदः कथमिति वाच्यम् । जातिव्यक्त्योरभेदस्याप्यङ्गीकारेण जातिनिष्ठस्यापि व्यक्तिनिष्ठत्वात् । जातिव्यक्तिमध्ये भेदस्तु प्रसिद्ध एव । अभेदस्तु व्यक्तेः प्रथमतो ग्रहणे तयोरभेदेन प्रतीत्योपपादनीय इति तेषामाशयः । तत्र जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति—**इदमित्थमिति** । इदम्भावो व्यक्त्यंशः । इत्थम्भावो जात्यंशः । **तद्विशेष्यमिति** । सास्नादिसंस्थानविशेषरूपजातेर्विशेष्यभूता व्यक्तिरित्यर्थः । तथा चाभेदे विशेषणविशेष्यभावासम्भवात्प्रथमज्ञानेऽपि जातिव्यक्त्योर्भेदेनैव प्रतीतिरिति भावः । **व्यावृत्तमेवेति** । तथा च व्यावृत्तिप्रयोजकीभूतधर्मस्य जातेस्तत्र विशेषणतया भानमावश्यकमित्याशयः । **व्यावृत्तिश्चेति** । गो-

सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः। तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित् क्वचिद् द्रव्यान्तरविशेषणतयावतिष्ठन्ते। गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूताः सन्तो द्रव्यविशेषणतयावस्थिताः। उभयत्र विशेषणविशेष्यभावः समानः। अत एव तयोर्भेदप्रतिपत्तिश्च। इयांस्तु विशेषः। पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हा इति। अतो 'वस्तुविरोधः प्रतीतिपराहतः'—इति प्रतीतिप्रकारनिन्हवादेवोच्यते। प्रतीतिप्रकारो हि इदमित्थमित्येव सर्वसम्मतः। तदेतत् सूत्रकारेण, 'नैकस्मिन्न सम्भवात्' (ब्र. सू. २।२।३१) इति सुव्यक्तमुपपादितम्। अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव। प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणाना-

---

त्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेर्व्यावृत्तिश्च निश्चीयते इत्यर्थः। **सर्वत्रेति**। एवं च यथा मनुष्यविशेषणीभूता दण्डकुण्डलादयो मनुष्याद्भिन्नास्तथैव जातिरपि व्यक्तेः सकाशाद्भिन्नेति भावः। ननु दण्डतद्वतोरिव जातिव्यक्त्योरपि भेदः स्याच्चेत्तत्रैव कुतः सहोपलम्भनियमो न दण्डतद्वतोरित्यत्राह—**तत्रेति। पृथगिति।** विशेष्यभूतमनुष्यादिभ्यः पृथगवयवरचनया स्थिता इत्यर्थः। **द्रव्यसंस्थानतयैवेति।** एतेन व्यक्त्यपेक्षया जातेरपृथक्सिद्धत्वं सूचितम्। एतदेव च सहोपलम्भनियमप्रयोजकं नत्वभेद इत्याशयः। **प्रतिपत्तिः।** ज्ञानम्। पृथक् स्थितेः पृथग् ज्ञानस्य च योग्या इत्यर्थः। **अत इति।** 'वस्तुविरोधः प्रतीतिपराहतः' इति हि भेदाभेदवादिनो वदन्ति। यद्यपि भेदरूपवस्तुनोऽभेदरूपस्य वस्तुनश्चैकत्र विरोधस्तथापि स त्याज्यः। लोके भेदाभेदयोरेकत्र प्रतीतेः। 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायादिति तस्यार्थः। परं त्वेतद्वास्तविकप्रतीतिप्रकारमपलप्यैव तैरुक्तमिति भावः। **नैकस्मिन्निति।** जैनमतं नोपपद्यते। एकस्मिन्वस्तुन्यस्तित्वनास्तित्वादेर्विरुद्धस्य छायातपवद्युगपदसम्भवादिति तत्सूत्रार्थः। **प्रत्यक्षादीति।** प्रत्यक्षादिदृष्टधूमादिसम्बन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः। **प्रमाणसंख्येति।** प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः। अनुमितिरपीति काणादबौद्धौ। उपमितिरपीति नैयायिकैकदेशिनः। शब्दोऽपीति नैयायिकाः। अर्थापत्तिरपीति प्राभाकराः। अनुपलब्धिरपीति भाट्टवेदान्तिनौ। सम्भवैतिह्यकावपीति पौराणिकाः। चेष्टापीति तान्त्रिकाः। इत्थं प्रमाणसंख्याविवादेऽपि प्रमेयविषये न विवादः। सर्वैरपि प्रायशः स्वस्वाभ्युपगतप्रमाणेष्वेवातिरिक्त

मयमेव विषय–इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः। वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञावत् स्ववाग्विरोधित्वमपि न जानाति।

यत्तु, प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं, भेदश्च विकल्पासहत्वात् दुर्निरूप–इत्युक्तम् ( पृ. ३८ पं. ७ )। तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव। अत एव नानवस्थान्योन्याश्रयणञ्च। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति।

अपि च, सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्तिर्विरुध्यते। यदि च, सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः, किमित्यश्वार्थी महिषदर्शनेन निवर्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते। किञ्च, अश्वे हस्तिनि

---

प्रमाणान्तर्भावस्योक्तत्वात्। **वस्तुगतेति**। सविशेषत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयमिति भावः।

**जात्यादिविशिष्टस्यैवेति**। उपपादितमेतत्। एतेन प्रत्यक्षस्य सन्मात्रग्राहित्वं निरस्तम्। **जात्यादेरेवेति**। वस्तुनो घटादिव्यक्तेर्यः पटादिप्रतियोग्यपेक्षया भेदव्यवहारः तथा अवयवसंस्थानरूपज्यात्यादेरेव भेदस्वरूपत्वेन स्वस्य जात्यादेर्यः पटाद्यवयवसंस्थानप्रतियोगिकभेदव्यवहारस्तद्धेतुत्वं जात्यादेरेव। तादृशजात्यादिविशिष्टस्यैव च प्रत्यक्षविषयत्वमिति भेदस्य प्रत्यक्षविषयत्वमर्थात्सिद्धमेवेति भावः। **नानवस्थेति**। भेदस्य दीपवत्स्वस्यैव स्वव्यवहारहेतुत्वेन भेदनिष्ठान्यभेदाङ्गीकारे प्रमाणाभावेन न पूर्वपक्ष्युक्ता–( पृ. ३९ पं. १४ ) नवस्थादोषः। तथा अवयवसंस्थानरूपजात्यादेरेव भेदस्वरूपत्वेन जात्यादिधर्मविशिष्टवस्तुग्रहणमेव भेदग्रहणमिति नान्योन्याश्रयदोष इत्याशयः।

च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वात् विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् । प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबाधिराद्यभावश्च प्रसज्येत ।

न च, चक्षुषा सन्मात्रं गृह्यते । तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात् । नापि त्वचा । स्पर्शवद्वस्तुविषयत्वात् । श्रोत्रादीन्यपि न सन्मात्रविषयाणि । किन्तु शब्दरसगन्धलक्षणविशेषविषयाण्येव । अतः सन्मात्रस्य च ग्राहकं न किञ्चिदिह दृश्यते । निर्विशेषसन्मात्रस्य च प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात् । सन्मात्रब्रह्मणः प्रमेयभावश्च । ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः । अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् । संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् तावतैव गोत्वादिजातिव्यवहारोपपत्तेरतिरेकवादेऽपि संस्थानस्य सम्प्रतिपन्नत्वाच्च संस्थानमेव जातिः । संस्थानं नाम स्वासाधारणरूपमिति यथावस्तु संस्थानमनुसन्धेयम् ।

---

**उपरितनस्येति** । अश्वज्ञानानन्तरं जायमानस्य हस्तिज्ञानस्य पूर्वज्ञानगृहीतविषयातिरिक्तविषयाग्राहित्वप्रसक्तौ पूर्वज्ञानजन्यसंस्कारविलक्षणसंस्कारानुत्पत्तिरिति स्मृतिवैलक्षण्यं न स्यात् । **विशेषाभावाच्चेति** । धारावाहिकस्थले चित्रदर्शनादौ ज्ञानानामेकविषयत्वेपि स्मृतिवैलक्षण्यप्रयोजकं प्रतिक्षणं विशेषदर्शनं भवति, तदप्यत्र नास्ति । भवन्मते प्रत्यक्षस्य सन्मात्रग्राहित्वादिति भावः ।

**रूपरूपीति** । रूपं शुक्लादि, रूपिणो घटादयः, रूपेण सहैकस्मिन्घटादिरूपेर्थे समवेताश्च ये पटाभावादयः एतत्त्रितयान्यतमग्राहित्वादित्यर्थः । **श्रोत्रादीनीति** । आदिना जिह्वाघ्राणयोः संग्रहः । **अनुवादकत्वमेव स्यादिति** । तच्चानिष्टम् । 'शास्त्रं ह्यप्राप्तविषयतयार्थवत् । अतएव भेदस्य लोकसिद्धत्वात्तद्विषयकत्वं शास्त्रस्य' इति तेषामेवोक्तेः । **प्रमेयभावश्चेति** । प्रमेयत्वं च प्राप्नोतीत्यर्थः । सति हि तस्मिंस्तद्व्यापकजडत्वादिधर्मप्रसङ्गः । **अत इति** । वस्तुसंस्थानमेव जातिर्जातिरेव च भेद इत्याशयः । तत्र संस्थानमेव जातिरित्युपपादयति—**संस्थानातिरेकिण इति** । **संप्रतिपन्नत्वाच्च** । स्वीकृतत्वाच्च । **स्वासाधारणेति** । स्वस्य घटादेरसाधारणं यत्कम्बुग्रीवादिमत्त्वं रूपं तदेव तस्य संस्थानम् । न तु द्रव्यत्वम् । तस्य घटसाधारणरूप-

जातिग्रहणेनैव भिन्न–इति व्यवहारसम्भवात् पदार्थान्तरादर्शनादर्थान्तरवादिनाप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः । ननु च, जात्यादिरेव भेदश्चेत् , तस्मिन् गृहीते तद्व्यवहारवत् भेदव्यवहारोऽपि स्यात् । सत्यम् । भेदश्च व्यवह्रियत एव, गोत्वादिव्यवहारात् । गोत्वादिरेव हि सकलेतरस्य व्यावृत्तिः । गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः । भेदग्रहणेनैव ह्यभेदनिवृत्तिः । अयमस्माद्भिन्न–इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात् प्रतियोग्यपेक्षया भिन्न–इति व्यवहार–इत्युक्तम् ।

यत् पुनः, घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम् ( पृ. ४० पं. ५ ) । तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिप्रकल्पितम् । द्वयोर्ज्ञानयोर्हि विरोधे बाध्यबाधकभावो, बाधितस्यैव व्यावृत्तिः । अत घटपटादिषु देशकालभेदेन विरोध एव नास्ति, यस्मिन देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नस्तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधाद्बलवतो बाधकत्वम् , बाधि

---

त्वात् । अथ जातिरेव भेद इत्युपपादयति—**जातिग्रहणेनेति** । न च जातेः प्रतियोगिनिरपेक्षत्वेन भेदस्य च प्रतियोगिसापेक्षत्वेन वैषम्यात् कथं तयोरैक्यमिति वाच्यम् । ईदृशवैषम्यस्याप्रयोजकत्वात् । अन्यथा घटाद्यभावाभावस्य घटादिस्वरूपत्वानापत्तावभावानामनवस्था दुर्वारा स्यादिति भावः । दर्शनं च नेत्याह—**पदार्थेति** । ननु तर्हि शशशृङ्गादिवत्तस्य तुच्छत्वमेव स्यादित्यत आह—**अर्थान्तरवादिनेति** । इतरेतराभावरूपो भेदोऽप्यस्तीतिवदतेत्यर्थः । **गोत्वादाविति** । पशुत्वेन गोसजातीया ये महिषादयस्तद्बुद्धिस्तद्व्यवहारश्च संस्थानरूपगोत्वज्ञानेन निवर्तत इति गोत्वमेव व्यावृत्तिरिति भावः । ननु प्रतियोगिनिरपेक्षगोत्वादिस्वरूपस्य भेदस्य कथमयमस्माद्भिन्न इत्यत्र प्रतियोगिसापेक्षत्वमिति चेत्तत्राह—**अयमिति । तदपेक्षत्वात् ।** प्रतियोग्यपेक्षत्वात् । प्रतियोग्यपेक्षायां हि स निर्दिश्यते नान्यथा । एवं च क्वचित्तादृशशाब्दव्यवहारविशेषस्थले भेदस्य प्रतियोगिसापेक्षत्वेऽपि सर्वत्र तथाङ्गीकारे मानाभावः । उक्तयुक्तिसिद्धस्य भेदस्वरूपस्य त्यागानौचित्यादित्याशयः ।

**अनालोचितेति** । बाध्यबाधकभावस्य व्यावृत्त्यनुवृत्त्योश्च विशेषोऽनालोचितो येन तस्येत्यर्थः । **विरोध एव नास्तीति** । घटे पटस्य व्यावर्तमानत्वेन प्रतीतावपि तस्य घटस्य तस्मिन्काले एवान्यत्र स्थितेन पटेन सह न विरोधः । नापि तस्य घ-

तस्य च निवृत्तिः। देशान्तरकालान्तरसम्बन्धितयानुभूतस्यान्यदेशकालयो-रभावप्रतीतौ न विरोध—इति कथमत्र बाध्यबाधकभावः, अन्यत्र निवृत्त-स्यान्यत्र निवृत्तिर्वा कथमुच्यते। रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवा भावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति, देशकालान्तरदृष्टस्य देश-कालान्तरव्यावर्त्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्र-मपारमार्थ्ये हेतुः। यत्तु अनुवर्त्तमानत्वात् सत्परमार्थ–(पृ. ४० पं. ४) इति। तत् सिद्धमेवेति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु। अनुभूति-तद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्च अनुभूतिरेव सतीत्येतदपि निरस्तम्।

यत्तु, अनुभूतेः स्वयंप्रकाशत्वमुक्तं, तद्विषयप्रकाशनवेलायां ज्ञातुरात्म-नस्तदेव, न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति। परानुभवस्य हा-नोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्। स्वानुभवस्याप्यतीतस्याज्ञासि-षमिति ज्ञानविषयत्वदर्शनाच्च। अतोऽनुभूतिश्चेत् स्वतःसिद्धेति वक्तुं न

---

टस्य तस्मिन्देशे एवान्यस्मिन्काले स्थितेन पटेन सह विरोधः। किं तु तद्देशे एव तत्काले एव स्थितेन पटेन विरोधः। एवं च यथा रज्ज्वास्तद्देशे एव तत्काले एव प्रतीतेन सर्पेण विरोध इति तत्र सर्पस्य मिथ्यात्वेऽपि नान्यत्र सर्पस्य मिथ्यात्वं त-थैव पटादीनामिति भावः। **अन्यत्रेति**। घटे व्यावर्तमानस्य पटस्य पटेऽपि निवृत्तिः कथमुच्यते इत्यर्थः। **न दृष्टमिति**। यत्र व्यावर्तमानत्वं तत्र मिथ्यात्वमिति नि-यमो नास्ति। घटे पटस्य व्यावर्तमानत्वेऽपि अन्यत्र पटस्य सत्यत्वदर्शनादिति भावः। **न साधनमिति**। प्रतिपक्षमतेन यदसिद्धं तदेव साधनमर्हति। इतरथा तु सिद्ध-साधनं दोषाय भवति।

**तद्विषयेति**। यदा देवदत्तस्य घटज्ञानं जायते तदा तज्ज्ञानं देवदत्तस्य स्वप्र-काशं भवति न तु यज्ञदत्तस्य। न हि देवदत्तस्य घटज्ञानवेलायां 'देवदत्तस्य घटज्ञानं जातम्' इति यज्ञदत्तस्य ज्ञानं जायते। किंतु तज्ज्ञानोत्तरं देवदत्तेन त्यक्ते स्वीकृते वा घटे यज्ञदत्तेन दृष्टे सति तेन लिङ्गेन 'देवदत्तस्य ज्ञानं जातम्' इति यज्ञदत्तो-ऽनुमिनोति। अतो ज्ञानं न सर्वेषां स्वप्रकाशम्। किं च ज्ञातुरपि न सर्वदा ज्ञानं स्व-प्रकाशमित्याह—**स्वानुभवस्येति**। **अत इति**। 'अनुभवस्यानुभवविषयत्वेऽनुभव-

शक्यते, 'अनुभूतेरनुभाव्यत्वेऽननुभूतित्वम्' इत्यपि दुरुक्तम्। स्वगतातीतानुभवानां परगतानुभवानाञ्चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमे च शब्दार्थसम्बन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्य्यस्य ज्ञानवत्त्वमनुभूय तदुपसत्तिश्च क्रियते, सा च नोपपद्यते। नचान्यविषयत्वेऽननुभूतित्वम्। अनुभूतित्वं नाम वर्त्तमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वं, स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत–इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वमेव। तत्स्वभावविरहात्। नानुभाव्यत्वात्। तथानुभूतेरननुभाव्यत्वेऽपि अननुभूतित्वप्रसङ्गो दुर्वारः। गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्। गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तं, नाननुभाव्यत्वप्रयुक्तमिति चेत् एवं तर्हि घटादेरप्यननुभूतित्वनिबन्धनमज्ञानाविरोधित्वमेव नानुभाव्यत्वमित्यास्थीयताम्। अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत–इति चेत्, अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत–एव।

---

त्वमेव न स्यात्' इति यो दोषः परैरुद्भावितः स नास्ति। अनुभवस्य सर्वत्र स्वतः सिद्धत्वस्य वक्तुमशक्यत्वात्। अनुभवत्वानुभवविषयत्वयोर्विरोधस्यैवाभावाच्चेति भावः। **परानुभवेति**। घटादिशब्दस्य तदर्थेन यः संबन्धस्तज्ज्ञानं देवदत्तस्य जातमित्यनुमानादिभिर्निश्चित्यैव तेन देवदत्तेन सह घटमानयेत्यादिशब्दैर्यज्ञदत्तो व्यवहरतीति भावः। **तदुपसत्तिः**। आचार्यसमीपे विद्याप्राप्त्यर्थं गमनम्। **अनुभूतित्वमिति**। अनुभूतिशब्दो ज्ञानमात्रपरः। न तु स्मृतिविलक्षणपरः। **वर्तमानेति**। प्रकाशमानत्वमित्येतावन्मात्रोक्तौ घटादावतिव्याप्तिरतः स्वाश्रयं प्रतीत्युक्तम्। आत्मधर्माणामणुत्वादीनां ज्ञानान्तरप्रकाश्यत्वात्तद्व्यावृत्त्यर्थं स्वसत्तयैवेति। अतीतानुभवव्यावृत्त्यर्थं वर्तमानतादशायामिति। वर्तमानतादशायां स्वसत्तयैव प्रकाशमानत्वमित्युक्ते परानुभवे तदसम्भवात्तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम्। **स्वसत्तयैवेति**। स्वाश्रयं प्रति वर्तमानतादशायामिति सम्बध्यते। **साधनत्वम्**। साधकत्वम्। **ते च**। तौ धर्मौ च। नन्वनुभवविषयत्वस्याननुभूतित्वप्रयोजकत्वाभावे कथं घटादेरननुभूतित्वमत आह—**घटादेरिति**। परमते दूषणमाह–**तथेति**। **निबन्धनं** प्रयोजकम्। शङ्कते– **अनुभूतेरिति**। **अननुभाव्यत्वेपीति**। यथा शङ्काकृताऽनुभाव्यत्वमज्ञानाविरोधि-

अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम् ।

यत्तु, संविदः स्वतःसिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते । तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते । प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम् । अनुभूत्यैव ग्रहणात् । कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत् । न ह्यनुभूतिः स्वसमानकालवर्त्तिनमेव विषयीकरोतीत्यस्ति नियमः । अतीतानागतयोरविषयत्वप्रसङ्गात् । अथ मन्यसे, अनुभूतिप्रागभावादेः सिध्यतस्तत्समकालभावनियमाऽस्तीति । किं त्वया क्वचिदेवं दृष्टं येन नियमं ब्रवीषि । हन्त, तर्हि तत एव दर्शनात् प्रागभावादिः सिद्ध—इति न तदभावनिन्हवः । तत्प्रागभावश्च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति । इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमो, यत् स्वसमानकालवर्त्तिनः पदार्थस्य ग्राहकत्वं, न सर्वेषां ज्ञानानां प्रमाणानाञ्च । स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्त्तिनोऽपि ग्रहणदर्शनात् । अत एव च प्रमाणस्य प्रमेयाविनाभावः । न हि प्रमाणस्य स्वकालवर्तिनाऽविनाभावोऽर्थसम्बन्धः । अपि तु यद्देशकालादिस-

---

त्वप्रयोजकमिति घटादिदृष्टान्तेन प्रतिपाद्यते तथा गगनकुसुमादिदृष्टान्तेनाननुभाव्यत्वमपि तत्प्रयोजकमिति कुतो नोच्यते इत्याशयः । **उपहास्यमिति** । समीपस्थेऽपि हास्यमित्यर्थः ।

**संविदः** । अनुभूतेः । **तदन्धस्येति** । असिद्धमत्यन्तासिद्धेन हेतुना साध्यते इत्यर्थः । **अनुभूतिप्रागभावादेरिति** । अनुभूतिप्रागभावादीन्विषयविशेषान्यदाऽनुभूतिः साधयति तदैव तत्समकालभावनियमो न तु सर्वविषयकानुभूतावित्यर्थः । **न तदभावेति** । अनुभूतिप्रागभावो नास्तीति वक्तुं न शक्यते इत्यर्थः । **योगिप्रत्यक्षादिष्विति** आदिशब्देनेश्वरप्रत्यक्षं गृह्यते । ननु प्रमाणज्ञानेऽपि प्रमेयासद्भावे किं तस्याप्रमाणज्ञानाद्भेदकमिति चेन्न । प्रमेयाविनाभावस्यैव तद्भेदकत्वात् । तदेवोपपादयति— **अत एवेति** । ज्ञानमात्रस्य समकालवर्तिविषयग्राहकत्वनियमाभावेनैव प्रमेयाविनाभावश्च सिद्ध इत्यर्थः । अन्यथा वर्तमानविषयालाभादसमकालवर्तिग्राहिणां तत्तत्प्रमाणानां प्रमेयाविनाभावो न सिध्येदिति भावः । **न हीति** । प्रमाणस्य स्वसमकालवर्तिनार्थेन यः संबन्धः सोऽविनाभावो नेत्यर्थः । **कालादीनि** । आदिशब्देन

म्बन्धितया योऽर्थोऽवभासते तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अत इदमपि निरस्तं, 'स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शनात्' इति। अथोच्येत, न तावत् संवित्प्रागभावः प्रत्यक्षावसेयः। अवर्त्तमानत्वात्। न च प्रमाणान्तरावसेयः। लिङ्गाद्यभावात्। न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते। नानुपलब्धिरपि कस्यचिद्दृश्यते। न चागमस्तद्विषयो दृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यतीति। यद्येवं स्वतःसिद्धत्वविभवं परित्यज्य प्रमाणाभावेऽवरूढश्चेत, योग्यानुपलब्ध्यैवाभावः समर्थित—इत्युपशाम्यतु भवान्।

किञ्च, प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत तस्य न सर्वदा सत्तामवगमयत् दृश्यत—इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते। तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः। घटादिविषयमेव संवेदनं स्वय कालानवच्छिन्नं प्रतीतं चेत्, ततसंवेदनविषयो घटादिरपि

---

संस्थानसंग्रहः। **तथाविधेति**। तादृशदेशकालविशिष्टाकारस्य यन्मिथ्यात्वं तस्य प्रत्यनीकं शत्रुभूतं प्रमाणं तद्भाव एवाविनाभाव इत्यर्थः। **स्मृतिर्नेति**। बौद्धैकदेशिसम्मतं स्मृतेर्निर्विषयत्वं निरस्तमित्यर्थः। नष्टेऽप्यर्थे तस्यैव स्मृतिविषयत्वात्। **अथोच्येतेति**। यद्यप्यनुभव एवानुभवप्रागभावं गृण्हातीति स्थापितं तथापि तन्न संभवति। निर्विशेषं न सामान्यमिति न्यायात्। अनुभवविशेषस्य प्रत्यक्षादेः कदाप्यत्रासंभवादित्याशयः। **अवर्तमानत्वादिति**। प्रत्यक्षं हि वर्तमानविषयमेव गृण्हातीति सर्वैरभ्युपेतम्। उत्तरयति—**यद्येवमिति**। स्वयंसिद्धत्वाभिमानेन किमपि वक्तुं प्रवृत्तोऽसि चेत्तर्हि किमपि नास्माभिरुच्यते। अथवा युक्तिविरुद्धमपि ज्ञानस्य स्वयंसिद्धत्वं गृहीत्वा तत एव तस्य सर्वदा प्रकाशमानत्वयोग्यतया प्रागभावो नास्तीति ब्रूषे तर्ह्यप्यस्माभिर्नोच्यते। यदि शास्त्रमर्यादया वक्तुं प्रवृत्तोऽसि तर्ह्युच्यते इत्यर्थः। **योग्येति**। ज्ञानस्य प्रागनुपलंभेन तत्प्रागभावोऽनुपलब्धिप्रमाणेन सिध्यतीति ज्ञानस्य नित्यत्वं नास्तीत्यर्थः।

अर्थापत्तिप्रमाणेनापि तत्सिद्धिमाह—**किं चेति**। स्वं प्रत्यक्षज्ञानम्। **तदप्रतीतिश्चेति**। घटादेः पूर्वोत्तरकालसत्ताया अप्रतीतौ बीजं तु ज्ञानस्य कालपरिच्छिन्नतया प्रतीतिरेव। तथा प्रतीतिश्च ज्ञानस्य नित्यत्वेऽनुपपन्नेत्यर्थात्तदनित्यत्वं सिध्यति। अर्थापत्त्यन्तरमाह—**घटादीति**।

कालानवच्छिन्नः प्रतीयत—इति नित्यः स्यात्। नित्यं चेत् संवेदनं स्वतः-सिद्धं, नित्यमित्येव प्रतीयेत। नच तथा प्रतीयते। एवमनुमानादिसंविदोपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति ते सर्वे कालानवच्छिन्ना नित्याः स्युः। संविदनुरूपस्वरूपत्वाद्विषयाणाम्। न च निर्विषया संवित् काचिदस्ति। अनुपलब्धेः। विषयप्रकाशनस्वभावतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता। संविदो विषयप्रकाशनसत्तास्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेः, अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदः तुच्छतैव स्यात्। न च स्वापमदमूर्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरतीति वाच्यम्। योग्यानुपलब्धिपराकृतत्वात्। तास्वपि दशास्वनुभूतिरनुभूता चेत, तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्। न च तदस्ति। नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः। अतः स्मरणाभावः कथमनुभवाभावं साधयेत्। उच्यते। निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति। न केवलमस्मरणनियमादनुभवाभावः। सुप्तोत्थितस्येयन्तं कालं न किञ्चिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः। न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहादहङ्का-

---

**नित्यः स्यादिति**। तथा च घटाद्यनित्यत्वस्यान्यथानुपपत्त्या ज्ञानानित्यत्वं सिध्यतीत्यर्थः। पुनरप्यर्थापत्तिमाह—**नित्यमिति**। ज्ञानस्य नित्यत्वसाधनं हि इदमिति ज्ञानं विषयीकृत्यैव कर्तव्यम्। परंतु भवन्नये ज्ञानस्य विषयीकारायोग्यतया स्वयमेव नित्यमिति प्रतीयेत, तथा तु न प्रतीयते। तदन्यथानुपपत्त्या ज्ञानानित्यत्वं सिध्यतीत्यर्थः। अथ निर्विषयानुभूतेर्नित्यत्वमिति पक्षं निराकरोति—**न चेति**। स्वप्रकाशवादिनो मतेऽपि ज्ञानस्य निर्विषयत्वं न सिध्यतीत्याह—**विषयप्रकाशनेति**। **निखिलेति**। निखिला ये स्मरणप्रयोजकाः संस्कारास्तेषां तिरस्कृतिकरा ये देहनाशादयः प्रबलहेतवस्तेषामभावेऽपि यतः स्वापाद्यवस्थास्थानुभूतेः स्मरणं कदापि न भवति अतः सा नैवानुभूतेति निश्चीयते। यद्यपि यत्रयत्रानुभवस्तत्र तत्र स्मरणं भवत्येवेति न नियमः। पथि गच्छता स्पृष्टतृणादेः स्मरणस्यावश्यम्भावादर्शनात्। तथापि यत्र यत्र कदाप्यस्मरणं तत्र तत्र नानुभव इति नियमोऽस्त्येवेत्यर्थः। **न चेति**। अस्मरणनियम-

रविगमाद्वेति शक्यते वक्तुम् । अर्थान्तरानुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात् । तास्वपि दशास्वहमर्थोऽनुवर्त्तत—इति च वक्ष्यते । ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम् । सत्यमुक्तम् । स तु आत्मानुभवः स च सविशेष एवेतिस्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते । केवलैव संविदात्मानुभव—इति चेन्न । सा च साश्रयेति ह्युपपादयिष्यते । अतोऽनुभातिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम् । अनुभूतेरनुभाव्यत्वसम्भवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता । तस्मान्न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरूपपत्तिमती ।

यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम् । तदप्यनुपपन्नम् । प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेऽपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलताविष्कृता भवति । तथा च, भवदभिमता अविद्यानुत्पन्नैव विविधविकारास्पदं तत्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् । तद्विकाराः सर्वे मिथ्याभता—इति चेत् , किं भवतः परमार्थभूतोऽप्यस्ति

---

स्याननुभवो न कारणं किं तु स्वापाद्यवस्थासु विषयसंचन्धराहित्यमहङ्कारनाशो वा कारणमित्याशयः । **अर्थान्तरेति** । घटाननुभवः पटविनाशस्यानुभूतकुड्याद्यस्मरणकारणं न दृष्टमित्यर्थः । एवं च स्वापाद्यवस्थास्वनुभुतिर्नानुभूयत एवेति सिद्धम् । **निराश्रयेति ।** ज्ञानमेवात्मेति वदद्भिर्ज्ञानं निराश्रयमेव स्वीकृतमिति भावः । शब्दान्तरेण पूर्वपक्षिमतमेवाङ्गीकृतमित्याशयेनाशङ्कते—**केवलैवेति** । **न साधयतीतीति** । इतिशब्दः प्रागभावासिद्धावन्वेति । नाप्यन्यत इत्यादिप्रागुक्तं ( पृ. ४३ पं. ११ ) खण्डयति—**अनुभूतेरिति** ।

**भावेष्विति** । यत्र भावेषु जन्माभावस्तत्र विकाराभाव इत्युक्ते यद्यपि प्रागभावे न व्यभिचारस्तस्याभावरूपत्वात् । तथापीयं केवलं तर्ककुशलता । कस्यचिद्वस्तुनः कस्मिंश्चिल्लक्षणे प्रतिपादिते यत्र दोषस्तद्भिन्नत्वेन निवेशे च यद्यपि तल्लक्षणं निर्दुष्टं भवति तथापि न तल्लक्षणं तद्वस्तुस्वरूपपरिचायकं भवतीति भावः । भावेष्वपि व्यभिचारं दर्शयति । **तथा चेति** । भावरूपा चेत्यर्थः । **अनैकान्त्यम्** । व्यभिचारः । शङ्कते—**तद्विकारा इति** । यत्र भावेषु जन्माभावस्तत्र सत्यविकाराभाव इत्येवं विकारस्य सत्यत्वविशेषणे न व्यभिचारः। अविद्याविकाराणां मिथ्याभूतत्वादित्याशयः ।

विकारः, येनैतद्विशेषणमर्थवद्भवति, न ह्यसावभ्युपगम्यते ।

यदप्यनुभूतिरजत्वात्[१] स्वस्मिन् विभागं न सहत–इति । तदपि नोपपद्यते । अजस्यैवात्मनो[२] देहेन्द्रियादिभ्यो विभक्तत्वात् । अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात् । स विभागो मिथ्यारूप–इति चेत् , जन्मप्रतिबद्धः परमार्थविभागः किं क्वचित् दृष्टस्त्वया । अविद्याया आत्मनः परमार्थतो विभागाभावे हि वस्तुतो ह्यविद्यैव स्यादात्मा । अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव । छेद्यभेदाच्छेदनभेदवत् । यदपि नास्या दृशेर्दृशिस्वरूपायाः दृश्यः कश्चिदपि धर्म्मोऽस्ति । दृश्यत्वादेव तेषां न दृशिधर्म्मत्वमिति च । तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्म्मैरुभयमनैकान्तिकम् । न च ते संवेदनमात्रम् । स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयं प्रति

---

**नह्यसाविति** । अद्वैतवादिना त्वया परमार्थविकारस्यानङ्गीकारात ।

अनुत्पन्नेयमित्याद्युक्तं ( पृ. ४४ पं. ५ ) खण्डयति–**यदपीति । विभागं** भेदम् । तत्राजेपि विजातीयभेदोऽस्तीति दर्शयति–**अजस्यैवेति । अभ्युपगताया इति ।** त्वयेत्यादिः । शङ्कते–**सविभाग इति ।** यत्राजत्वं तत्र परमार्थतो विभागो नास्तीत्येव नियमः । तेन तत्र मिथ्याविभागसत्वेऽपि न क्षतिरिति शङ्काशयः । **जन्मप्रतिबद्धः** । उत्पत्तिव्याप्तः । प्रागुक्तनियमे हि परमार्थतो विभागः उत्पत्तिसत्वे एव स्यादिति तस्योत्पत्तिव्याप्तत्वम् । **कचिदिति** । पूर्वपक्षिणा परमार्थतो विभागस्य क्वाप्यनङ्गीकारेण प्रतियोग्यप्रसिध्या ' परमार्थतो विभागो नास्ति ' इति वक्तुं न शक्यते इति भावः । विभागस्य मिथ्यात्वे दूषणान्तरमाह–**अविद्याया इति ।** अथ सजातीयभेदं दर्शयति–**अबाधितेति ।** अबाधिता या घटोऽयं पटोऽयमित्यादिप्रतिपत्तिस्तया सिद्धो यो दृश्यानां घटादीनां भेदस्तत्समर्थनेन ज्ञानभेदोऽपि समर्थित एवेत्यर्थः । अथ स्वगतभेदं दर्शयति–**यदपीति । दृशेः** । अनुभूतेः । अयं पक्षनिर्देशः । **दृशिस्वरूपाया इति ।** हेतुनिर्देशः । अनुभूतिर्न दृश्यधर्मवती दृशिस्वरूपत्वात् । यत् दृश्यधर्मवत् तन्न दृशिस्वरूपं यथा घट इति व्यतिरेक्यनुमानम् । अन्वय्यनुमानमाह–**दृश्यत्वादेवेति ।** दृश्यो न दृशिधर्मः दृश्यत्वाद्यथा घटत्वम् । एतदुभयविधलिङ्गस्य परोक्तस्य व्यभिचारमाह–**तदपीति ।** आदिपदेनैकत्वसंग्रहः । **ते** । नित्यत्वादये

---

१ क. रजडत्वात् २ क. अजडस्यैवा.

कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम् । स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता । प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् । सर्वकालवर्तमानत्वं हि नित्यत्वम् । एकत्वमेकसंख्यावच्छेद-इति । तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि तैश्चैतन्यधर्म्मभूतैरप्यनैकान्त्यमपरिहार्य्यम् । संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्म्मो नाभ्युपेतश्चेत् तन्निषेधोक्तया किमपि नोक्तं भवेत् ।

अपि च, संवित् सिध्यति वा न वा-। सिध्यति चेत्, सधर्म्मता स्यात् । नो चेत् , तुच्छता । गगनकुसुमादिवत् ।सिद्धिरेव संविदिति चेत् , कस्य कं प्रतीति वक्तव्यम् । यदि न कस्यचित् कञ्चितप्रति सा, तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित् कञ्चितप्रति भवति । आत्मन इति चेत् कोऽयमात्मा । ननु संविदेवेत्युक्तम् । सत्यमुक्तम् । दुरुक्तन्तु तत् । तथा हि । कस्यचित् पुरुषस्य किञ्चिदर्थजातं प्रति सिद्धिरूपतया तत्सम्बन्धिनी सा संवित् स्वयं कथमिवात्मभावमनुभवेत् । एतदुक्तं भवति । अनु-

---

धर्माः । तेषां मिथ्यात्वं तु न । ज्ञानवृत्तिनित्यत्वस्य मिथ्यात्वे ज्ञानस्यानित्यत्वप्रसङ्गात् । अतस्तेषां ज्ञानस्वरूपत्वं परैरुक्तम् । तदपि न संभवतीत्यर्थः । **प्रकाशश्चेति ।** सर्वे पदार्थास्तदा व्यवहारानुगुणा भवन्ति यदा तद्व्यवहारहेतुषु मध्ये ज्ञानं सन्निधत्ते इत्याशयः । अथ तेषां धर्माणामभावरूपत्वेऽपि व्यभिचारमाह–**तेषामिति ।** अभावरूपाणामपि तेषां धर्माणां ज्ञानस्वरूपानतिरिक्तत्वे दूषणमाह–**संविदीति । किमपि नोक्तमिति ।** तदुक्तं संवित्सिद्धौ । ' न वेद्यं वित्तिधर्मः स्यादिति यत्त्वागुदीरितम् । तेनापि साधितं किंचित्संविदोऽस्ति न वा त्वया । अस्ति चेत् पक्षपातः स्यान्नचेत्ते विफलः श्रमः ' ( सं. सि. पृ. ९७ ) इति ।

अथ ज्ञानस्यात्मत्वं निराकर्तुमारभते–**अपि चेति । सिध्यति ।** प्रतीयते । **सधर्मतेति ।** सर्वप्रमाणानां सविशेषविषयत्वस्य पूर्वमुपपादितत्वात् । सधर्मता च तवानिष्टेति भावः। शङ्कते–**सिद्धिरेवेति ।** प्रतीतिरेवेत्यर्थः। तस्याश्च प्रतीत्यन्तरानपेक्षत्वेन न प्रमितिविषयत्वप्रयुक्तं सविशेषत्वं नापि च तुच्छत्वमित्याशयः। तत्रापि सविशेषत्वमाह–**कस्येति ।** प्रतीतेराश्रयो विषयश्च वक्तव्य इत्यर्थः । **तत्संबन्धिनीति ।**

भूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्म्मविशेषः, घटमहं जानामि, इममर्थमवगच्छामि, घटमहं संवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताप्युपपादिता। अस्य सकर्म्मकस्य कर्तृधर्म्मविशेषस्य कर्म्मत्ववत् कर्तृत्वमपि दुर्घटमिति। तथा ह्यस्य कर्त्तुः स्थिरत्वं, कर्त्तृधर्म्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते। कर्तृस्थैर्य्यन्तावत् स एवायमर्थः पूर्वं मयानुभूत–इति प्रत्यभिज्ञासिद्धम्। अहं जानाम्यहमज्ञासिषं, ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा–इति कुतस्तदैक्यम्। एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टमिदमपरेद्युरिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते। अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसम्भवः। किञ्च, अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसन्धानासम्भवस्तदवस्थः। प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम्। अहमेवेदं पूर्वमप्यन्वभूवमिति भवतोऽनुभूतेर्नह्यनुभावितृत्वमिष्टम्। अनुभूतिरनुभूतिमात्रमेव। संविन्नाम काचिन्निराश्रया निर्विषया वा अत्यन्ता-

---

पुरुषसंबन्धिन्याः संविदः पुरुषरूपत्वं दुर्वचमिति भावः। **भवतापीति**। एतेन ज्ञानं द्विविधं सकर्मकमकर्मकं च। तत्राद्यं जडरूपम्। द्वितीयं त्वात्मरूपमितिपरोक्तमपास्तम्। स्वोक्तिविरोधादिति भावः। **अस्येति**। यथा सकर्मकस्य कर्मत्वं नास्ति तथा कर्तृधर्मस्य कर्तृत्वमपि नास्तीति ज्ञानस्यात्मरूपत्वं न संभवतीत्यर्थः। **तथेति**। किंचेत्यर्थः। हिर्हेतौ। ज्ञानस्यास्थिरत्वादपि तस्य स्थिरात्मस्वरूपत्वं नास्तीत्यर्थः। अथ प्रत्यभिज्ञाश्रयत्वेन स्थैर्यं दर्शयति–**एवमिति**। ननु ज्ञानस्य नित्यत्वेन क्षणभङ्गित्वाभावान्नायं दोष इत्यत आह–**किंचेति**। **अनुभूतिमात्रमेवेति**। यथा गमनक्रियाया गन्तृत्वासंभवस्तथैव ज्ञानस्य ज्ञातृत्वासंभव इत्याशयः। ननु न वयं ज्ञानसामान्यस्यात्मत्वं वदामः, किं तु तद्विशेषभूतायाः संविदः। संविच्च निराश्रया निर्विषया आत्मरूपैवेति चेत्तत्राह–**संविन्नामेति**। ननु त्वन्मतेऽपि साश्रया सविषया च संविदङ्गीकार्यैव। तथाच तस्या एव लाघवादात्मत्वमस्तु। किमतिरिक्त-

नुपलब्धेर्न सम्भवतीत्युक्तम् । उभयाभ्युपगता संविदेव आत्मेत्युपलब्धिः पराहतम् । अनुभूतिमात्रमेव परमार्थ इति निष्कर्षहेत्वाभासाश्च निराकृताः ।

ननु चाहं जानामीत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थः स आत्मा । तस्मिंस्तद्बलनिर्भासिततया युष्मदर्थलक्षणोऽहं जानामीति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव । नैतदेवम् । अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव । किञ्च,

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्त्तते ॥

---

धर्मिभूतात्मकल्पनेन । धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायादिति चेत्तत्राह–**उभयेति** । आत्मत्वस्याहं जानामीति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतम् । उक्तलाघवन्यायस्तु कल्पनायामेव न तूपलब्धाविति बोध्यम् । **अनुभूतीति** । ' अनुभूतिमात्रमेव परमार्थः ' इति यो निष्कर्षः सिद्धान्तस्तत्साधकत्वेन पूर्वपक्षिणा प्रदर्शिता ये हेतवस्ते हेत्वाभासा एव ते च प्रागेव निराकृता इति भावः ।

अथ ज्ञानात्मवादी उपलब्धिपराहतत्वं निराकुर्वंश्चोदयति–**ननु चेति** । **अनिदमंशः** । इदमंशः परागर्थस्तद्व्यतिरिक्तो यः प्रकाशैकरसत्वात्प्रत्यगर्थश्चित्पदार्थो ज्ञानं स एवात्मा नत्वहमर्थ आत्मा । परप्रकाश्यत्वं पराक्त्वम् । स्वप्रकाशत्वं च प्रत्यक्त्वम् । यश्चाहं जानामीति प्रतीतावहमर्थः सिध्यति स तु ज्ञानबलेन निर्भासितः प्रकाशितोऽतएव युष्मदर्थलक्षणः ज्ञानबलप्रकाशितत्वरूपं यद्युष्मदर्थस्य लक्षणं तद्विशिष्टः अतो युष्मदर्थ एव । एवं चाहं जानामीत्यत्र प्रत्यक्त्वलक्षणात्मत्वस्य न ज्ञातृत्वसामानाधिकरण्येनोपलब्धिरिति न तदुपलब्धिपराहतमित्याशयः । **धर्मधर्मितयेति** । ज्ञानं हि यस्यात्मनो भवति स ज्ञानस्वरूप एवेति ज्ञानं ज्ञानस्यैव भवतीति पर्यवसन्नम् । तथा चाहं ज्ञानमिति प्रत्ययेन भाव्यं न त्वहं जानामीति धर्मधर्मितयेति प्रत्यक्षप्रतीतिविरोधोऽस्त्येवेत्यर्थः । **अहमर्थ इति** । प्रत्यक्त्वं च न ज्ञानस्यात्मत्वसाधकं किं तु ज्ञातुरहमर्थस्यैव । यतः प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वम् । पराक्त्वं च परस्मै प्रकाशमानत्वम् । इदंताविशिष्टात्परागर्थादहंबुध्यैव प्रत्यगर्थस्य भेदानुभवात् । ईदृशं प्रत्यक्त्वमहमर्थस्यैव न ज्ञानस्येति ज्ञानात्मवादे एवात्मनः प्रत्यक्त्वं न सिद्ध्यतीत्यर्थः ।

अहमर्थविनाशश्चेन्मोक्ष-इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचिज् ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥
स्वसम्बन्धितया ह्यस्याः सत्ताविज्ञप्तितादि च ।
स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिध्यति ॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥
विज्ञातारमरे केन, जानात्येवेति च श्रुतिः ।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ-इति च स्मृतिः ॥
नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
ज्ञोऽत-एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥

अहंप्रत्ययसिद्धो ह्यस्मदर्थः । युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ-इति वचनं, जननी मे वन्ध्येतिवत् व्याहतार्थश्च । न चासौ ज्ञाताहमर्थोऽन्याधीनप्रकाशः । स्वयंप्रकाशत्वात् । चैतन्यस्वभावता हि स्वयंप्रकाशता । यः प्रकाशस्वभावः सोऽनन्याधीन-

---

**अहमर्थविनाशश्चेदिति** । ज्ञानात्मवादेऽनात्मभूतस्याहमर्थस्य मोक्षे विनाशाङ्गीकारात् । अहमर्थस्य नाशेऽपि ज्ञानं नित्यं तिष्ठत्येवेति चेत्तत्राह—**मयीति** । नहि मयि नष्टेऽपि स्तम्भस्तिष्ठतीति बुध्या कृतः शिरश्छेदः पुरुषार्थो भवति । किं च मोक्षप्राप्तयेऽहमर्थस्य या श्रवणादौ प्रवृत्तिर्जायते सा त्वन्मते न स्यात् । न हि कश्चित्स्वनाशाय प्रवर्तते इति भावः । **ज्ञप्तिर्ज्ञानम्** । किं च मोक्षेऽहमर्थस्य विनाशाङ्गीकारे केवलज्ञानस्यास्तित्वमपि न संभवतीत्याह—**स्वसंबन्धितयेति । विज्ञप्तिता** । विषयप्रकाशत्वम् । **विज्ञातारमिति** । श्रुतौ विज्ञातारमित्यनेन जानातीत्यनेन च स्मृतौ यो वेत्ति तामित्यनेन सूत्रे च ज्ञ इत्यनेन ज्ञातुरेवात्मत्वं सिध्यतीत्यर्थः । ज्ञोत एवेत्यत्रात्मशब्दानुवृत्तिसूचनार्थं नात्माश्रुतेरित्युपात्तम् ।

दूषणान्तरमाह—**अहंप्रत्ययसिद्धो हीति** । अत्र सिद्धशब्देनास्मदर्थस्य स्वतःसिद्धिः सूच्यते । हिशब्देन प्रसिद्धिं दर्शयति । यतो ज्ञानात्मवादिनापि शारीरभा-

प्रकाशो दीपवत् । न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेन प्रकाशित्वमन्याधीनप्रकाशत्वञ्च । किं तर्हि, दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते, अन्यानपि प्रकाशयति प्रभया । एतदुक्तं भवति । यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते । यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता तथापि तेजोद्रव्यमेव । न शौक्ल्यादिवत् गुणः । स्वाश्रयादन्यत्रापि वर्त्तमानत्वात् । रूपवत्त्वाच्च शौक्ल्यादिधर्मवैधर्म्यात् । प्रकाशवत्त्वाच्च तेजोद्रव्यमेव । नार्थान्तरम् । प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषाञ्च प्रकाशकत्वात् । अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः । न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते । मणिद्युमणिप्रभृतीनां विनाशप्रसंगात् । दीपेऽप्यवयविप्रतिपत्तिः कदाचिदपि न स्यात् । न हि विशरणस्वभावावयवा दीपाश्चतुरंगुलमात्रनियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्य्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति वक्तुं शक्यते । अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारण

---

स्यारम्भे युष्मदस्मत्प्रत्ययगोचरयोरित्युक्तम् । **स्वप्रभेति** । यथा घटादिर्दीपप्रभाया बलेन निर्भासितः सन्नेव प्रकाशते तत एव चान्याधीनप्रकाशो भवति न तथा दीपस्तस्य प्रकाशस्वभावत्वात् । **अन्यानपीति** । विषयप्रकाशनक्षमस्यापि दीपस्य सर्वत्र व्याप्त्यभावेन विषयसंबन्धाभावात्तस्य स्वरूपेण न प्रकाशकत्वं किं तु विषयसंबन्धिनी या स्वपरिकरभूता प्रभा तद्द्वारेणेत्यर्थः । **एतदुक्तमिति** । यथैकमेव तेजोद्रव्यं प्रभारूपेण प्रभावद्रूपेण चावतिष्ठते तथैवात्मा चिद्रूप एव चैतन्यगुण इति भावः । प्रभाया गुणत्वमाशङ्कते—**यद्यपीति** । प्रभावतो द्रव्यस्य गुणभूता प्रभेत्यर्थः । उत्तरयति—**तथापीति** । **स्वाश्रयादिति** । स्वं प्रभा तस्या आश्रयभूतो यो दीपस्तस्मादन्यत्र तत्समीपप्रदेशे वर्तमानत्वात् । न हि शौक्ल्यादयो गुणा एवं दृश्यन्ते । किं च तेषां न रूपवत्वं प्रभायास्तु रूपवत्वमित्यपि वैधर्म्यम् । अथ विशीर्णाश्रयावयवानां प्रभात्वं प्रतिक्षिपति—**न चेति** । **द्युमणिः** । सूर्यः । दूषणान्तरमाह—**दीपेऽपीति** । दीपावयवानां प्रथमतो यत्पिण्डीभावेनोर्ध्वमुद्गमनं नियमेन भवति तत्तेषां विशरणस्वभावत्वेन न स्यात् । ततश्च दीपज्ञानं नस्यादितिभावः । **पुष्कलेति** । पुष्कलं यत्कारणं महती वर्तिर्बहुतैलमित्यादि तस्य दीपे क्रमेण संबन्धो भवति । अग्रिमावयवस्य पूर्वमग्निसंयोगः । तत्पश्चात्तनावयवस्य पश्चात् । सर्वेषां च दीप-

क्रमोपनिपातात् तद्विनाशे विनाशाच्चावगम्यते । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्याद्युपलब्धिर्व्यवस्थाप्यम् । अग्न्यादीनामौष्ण्यादिवत् । एवमात्मा चिद्रूप एव चैतन्यगुण- इति । चिद्रूपता हि स्वयंप्रकाशता । तथा हि श्रुतयः, ' स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव ! एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः ' ( बृ. ४।५।१३ ) ' विज्ञानघनएव ' ( बृ. २।४।१२ ) ' अत्रायं पुरुषः स्वयं ज्योतिर्भवति ' ( बृ. ४।३।९ ) ' न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ' ( बृ. ४।३।३० ) ' अथ यो वेदेदं जिघ्राणीति स आत्मा ' ( छां. ८।१२।४ ) ' कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ' ( बृ. ४।३।७ ) ' एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः ' ( प्र. ४।९ ) ' विज्ञातारमरे केन विजानीयात् ' ( बृ. २।४।१४ ) जानात्येवायं पुरुषः ' ' न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ' ( छां. ७।२६।२ ) ' स उत्तमः पुरुषो नापजनं स्मरन्निदं शरीरम् ' ( छां. ८।१२।३ )

---

कारणत्वं वर्तत एव । एकदैव सर्वत्राग्निसंयोगे कृते सर्वत्र दीपोत्पत्तिदर्शनात् । ततश्च यद्येक एव दीपः स्थायी स्यात् तर्हि तस्याग्रिमावयवसंबन्धेनैवोत्पत्तौ सत्यामितरावयवसंयोगानपेक्षा स्यात् । चरमावयवसंयोगनाशे दीपनाशश्च न स्यात् । अतो दीपस्य क्षणिकत्वं स्वीकार्यमिति भावः । ननु प्रभाया विशीर्णावयवत्वाभावे दीपसमीपे एवौष्ण्यप्रकाशयोराधिक्यं दूरे च न्यूनत्वं कथमुपलभ्यते इति चेत्तत्राह- **प्रभाया इति । चिद्रूप एवेति ।** ज्ञानस्वरूपस्य धर्मिण आत्मनो गुणोऽपि ज्ञानस्वरूपः । न च धर्मधर्मिणोरुभयोर्ज्ञानस्वरूपत्वं कथमितिवाच्यम् । व्यक्तिभेदेनाविरोधात् । यथा नरस्यैव राज्ञो नरा एव सेवका इति सेव्यसेवकयोर्व्यक्तिभेदेनोभयोरपि नरत्वमविरुद्धं तद्वदित्याहुः । **विज्ञानघन एवेति ।** एवकारेणात्मनि स्वल्पस्यापि जडांशस्य व्यावृत्तिः । ज्ञानगुणकत्वज्ञानस्वरूपत्वप्रतिपादकवाक्यमाह-**एष हीति ।** ज्ञेयं यन्निकृष्टात्मस्वरूपं तत्स्वरूपमाह-**विज्ञातारमिति ।** अनेन ज्ञातृत्वं स्वाभाविकमिति फलितम् । **जानात्येवायमिति ।** एवकारार्थस्यावधारणस्य सङ्कोचे प्रमाणाभावेन सार्वत्रिकत्वान्मुक्तावपि ज्ञातृत्वमस्तीत्यर्थः । मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागं दर्शयति-**न पश्य इति, स उत्तम इति च । नोपजनमिति ।** स्त्रीपुंसयो-

' एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति ' ( प्र. ६।५ ) ' तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः ( तै. २।४।१ ) इत्याद्याः । वक्ष्यति च ' ज्ञोऽत एव ' ( ब्र. सू. २।३।१९ ) इति । अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव, न प्रकाशमात्रम् । प्रकाशत्वादेव कस्यचिदेव भवेत् प्रकाशः प्रदीपादिप्रकाशवत् । तस्मान्नात्मा भवितुमर्हति संवित् । संविदनुभूतिज्ञानादिशब्दाः सम्बन्धिशब्दा– इति च शब्दार्थविदः । न हि लोकवेदयोर्ज्ञानात्यादेरकर्मकस्याकर्तृकस्यच प्रयोगो दृष्टचरः ।

यच्चोक्तम् ( पृ. ४५ पं. १ ) अजडत्वात्संविदेवात्मेति । तत्रेदं प्रष्टव्यम् । अजडत्वमिति किमभिप्रेतम् । स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत् । तथा सति दीपादिष्वनैकान्त्यम् । संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिरिति विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् । यदुच्येत, सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिरिव जडत्वेन नात्मेति । ज्ञानं किं स्वस्मै प्रकाशते

---

रन्योन्योपगमेन जायते इत्युपजनं शरीरं मुक्तौ न स्मरन्नित्यर्थः । निषेधस्य प्रतियोगिसापेक्षत्वेन मुक्तौ ज्ञातृत्वमस्तीत्येतच्छ्रुतिः सूचयति । **एवमिति** । पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वे सत्येव देहेन्द्रियविगम इत्याशयः । प्राणः १ श्रद्धा २ पंचभूतानि ७ इन्द्रियं ८ मनः ९ अन्नं १० वीर्यं ११ तपः १२ मन्त्राः १३ कर्म १४ लोकाः १५ नाम १६ चेत्येताः षोडशकलाः । पुरुषः अयनं स्थानं यासां ताः पुरुषायणाः । **ज्ञोत एवेति** । अत एव पूर्वोक्तश्रुतिभ्य एवात्मा ज्ञः ज्ञातृस्वरूप एवेति सूत्रार्थः । केवलज्ञानस्यात्मस्वरूपत्वे दूषणान्तरमाह–**संविदिति** । तथा च तत्सबन्धित्वेनाश्रयविषयावश्यं स्वीकार्याविति निराश्रयस्य निर्विषयस्य ज्ञानस्यासिद्धिरिति भावः ।

**संविदतिरिक्तेति** । स्वसत्ताप्रयुक्तप्रकाशत्वमित्युक्तवता स्वपदग्राह्यात् ज्ञानात्तत्सत्ताप्रयुक्तप्रकाशस्यातिरिक्तत्वमवश्यं स्वीकार्यमेव । तस्य च तेन ज्ञानात्मवादिनाऽनङ्गीकाराद्विरोध इति भावः । **अव्यभिचरितेति** । यस्य सत्तायां प्रकाशनो न व्यभिचरति तत्त्वमजडत्वमित्यर्थः । अथ स्वस्मै प्रकाशमानत्वमेवाजडत्वमित्याशयेनाशङ्कते–**यदुच्यतेति** । उत्तरयति–**ज्ञानं किमिति** ।

तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते । अहं सुखीतिवत् जानाम्यहमिति । अतः स्वस्मै प्रकाशमानत्वमेवंरूपमजडत्वं संविद्यासिद्धम् । तस्मात्स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा । ज्ञानस्यापि प्रकाशता तत्सम्बन्धायत्ता ततृकृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वमितरंप्रति अप्रकटत्वञ्च । अतो न ज्ञप्तिमात्रमात्मा । अपि तु, ज्ञातैवाहमर्थः ।

अथ यदुक्तम्, (पृ. ४५ पं. ३) अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयावभासते रजततयेव शुक्तिः । निरधिष्ठानभ्रमानुपपत्तेरिति । तदयुक्तम् । तथा सति अनुभवसामानाधिकरण्येनानुभविताहमर्थः प्रतीयेत अनुभूतिरहमिति । पुरोऽवस्थितभास्वरद्रव्याद्याकारतया रजतादिरिव । अत्र तु, पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम् । तथा ह्यनुभवाम्यहमिति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त-इतिप्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ।

यदप्युक्तम्, (पृ. ४५ पं. ५) स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति । तदयुक्तम् । आत्मतयाभिमताया अनुभूतेरपि मिथ्यात्वं स्यात् । तद्वत एव प्रतीतेः । सकलेतरोपमर्दितत्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत् । हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ।

---

**तत्संबन्धेति** । ज्ञातृसंबन्धेत्यर्थः । ज्ञातृसंबन्धं विना ज्ञानस्फुरणस्यासंभवात् ।

संविदपि मिथ्या किं न स्यादित्यत्राह—**निराधिष्ठानेति । अनुभूतिरहमितीति ।** अत्रानुभूतिः स्वरूपसती विवक्षिता । भ्रमाधिष्ठानभूताया अनुभूतेर्भ्रमे स्वरूपेण ज्ञानासंभवात् । **इतिप्रत्ययवदिति ।** यथा केवले दण्डे दण्डीति प्रत्ययो भ्रान्त्यापि न भवति तथेत्यर्थः ।

अनुभूतेर्मिथ्यात्वे हेतुमाह—**तद्वत एवेति ।** देहात्माभिमानवत एवेत्यर्थः । **तदबाधादिति** । ज्ञातृत्वस्याबाधितत्वं तु ' जानात्येवायं पुरुषः ' इति मुक्तावपि ज्ञातृत्वपरश्रुतिवाक्यादवसेयम् ।

यदप्युक्तम् ( पृ. ५५ पं. ७ ) अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न सम्भवति। अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः। अपि त्वन्तःकरणरूपस्याहङ्कारस्य। कर्तृत्वादिर्हि रूपादिवद्दृश्यधर्मः। कर्तृत्वे चाहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव अनात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति। नैतदुपपद्यते। देहस्येवाचेतनत्वप्रकृतिपरिणामित्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य। एतदुक्तं भवति। यथा देहादिर्दृश्यत्वपराक्त्वादिभिर्हेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते, एवमन्तःकरणरूपाहंकारोऽपि तद्दृश्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत–इति। अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य। दृशित्ववत्। यथा दृशित्वं तत्कर्मणोहङ्कारस्य नाभ्युपगम्यते तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्। ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्। ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वं चात्मनो, 'नात्मा श्रुतेः' ( ब्र. सू. २।३।१८ ) इत्यादिषु वक्ष्यति। 'ज्ञोऽत एव' ( ब्र. सू. २।३।१९ ) इत्यत्र, ज्ञ–इति व्यपदेशेन ज्ञानगुणाश्रयत्वं च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव म-

---

ज्ञातृत्वमन्तःकरणस्य धर्म इति दूषयति **देहस्येवेति**। **तत्प्रत्यनीकेति**। दृश्यत्वस्य प्रत्यनीकं विरुद्धं द्रष्टृत्वम्। पराक्त्वस्य च विरुद्धं प्रत्यक्त्वम्। तादृशद्रष्टृत्वादेः सकाशाद्देहादिर्विविच्यते दूरं तिष्ठति तैर्धर्मैर्न संबध्यते तद्वदेवान्तःकरणमपीति नान्तःकरणस्य द्रष्टृत्वमित्याशयः। ज्ञातृत्वस्य विक्रियात्मकत्वं परोक्तं खण्डयति–**न चेति**। **नात्मा श्रुतेरिति**। आत्मानोत्पद्यते। 'न जायते म्रियते' ( का० २।१७ ) इत्यादिश्रुतेः। ताभ्यः 'नित्योनित्यानाम्'। ( का० ५।१३ ) इत्यादिश्रुतिभ्यः आत्मनो नित्यत्वावगमाच्चेति सूत्रार्थः। **वक्ष्यतीति**। 'यावदात्मभावित्वाच्च' ( ब्र. सू. २।३।३० ) इति सूत्रेप्येतत्स्पष्टम्। ज्ञानगुणस्यात्मस्वरूपव्यापकत्वेन श्रुतौ क्वचिदात्मन्यपि ज्ञानशब्दप्रयोगः। वस्तुतः स आत्मगुण एवेति तत्तात्पर्यम्। **ज्ञानस्वरूपस्य**। ज्ञानं स्वरूपं स्वरूपनिरूपणधर्मो यस्य। ज्ञानं स्वाभाविकनित्यधर्मश्चे

णिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम् । स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हमित्युपपादयिष्यामः । अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । इममिन्द्रियद्वारज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते । ज्ञानप्रसरे तु कर्तृत्वमस्त्येव । तच्च न स्वाभाविकम् । अपितु कर्मकृतमित्यविक्रियस्वरूप एवात्मा । एवं रूपाविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसम्भवः । जडस्वभावस्याहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या तत्सम्भव–इति चेत् । केयं चिच्छायापत्तिः । किमहङ्कारच्छायापत्तिः संविदः, उत संविच्छायापत्तिरहङ्कारस्य । न तावत् संविदः । संविदि ज्ञातृत्वानभ्युपगमात् । नाप्यहङ्कारस्य । तस्य जडस्य उक्तरीत्या ज्ञातृत्वायोगात् । द्वयोरप्यचाक्षुषत्वाच्च । न ह्यचाक्षुषाणां छाया दृष्टा । अथाग्निसम्पर्कादयःपिण्डौष्ण्यवच्चित्सम्पर्कात् ज्ञातृत्वोपलब्धिरिति । नैतत् । संविदि वास्तवज्ञातृत्वानभ्युपगमादेव न तत्सम्पर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा । अहङ्कारस्य त्वचेतनस्य ज्ञातृत्वासम्भवादेव सुतरां न तत्सम्पर्कात् संविदि ज्ञातृत्वं तदुपलब्धिर्वा ।

---

त्सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह– **स्वयमिति** । **उपपादयिष्याम इति** । जीवात्मनः परं ज्योतिरुपसंपद्य ज्ञानविकासो भवतीति 'संपद्याविर्भावः' (ब्र. सू. ४।४।१) इत्यत्र वक्ष्यते । ननु ज्ञानस्य संङ्कोचविकासार्हत्वे मुक्ताविव विकासः प्रागेव च सङ्कोच इति कुतो नियम इत्यत आह–**कर्मणेति** । सङ्कोचकोपाधिः । क्षेत्रज्ञावस्थायामेव सङ्कोच इत्यर्थः । **प्रवर्तत इति** । ज्ञानमुत्पन्नं ज्ञानं नष्टमिति व्यवहारो विकाससङ्कोचमूलक एवेत्यर्थः । **अस्त्येवेति** । एतेनात्मनोऽकर्तृत्वं निरस्तम् । एतादृशकर्तृत्वस्येष्टत्वात् । आत्मनो मुक्तावचेतनवत्परिणामाङ्गीकारस्यानुचितत्वात् । नन्वात्मनः कर्तृत्वे विकारापत्तिरत आह–**तच्चेति** । **ज्ञानस्वरूपस्येति** । ज्ञानमेव स्वरूपं स्वाभाविको धर्मो यस्य स ज्ञानस्वरूपः । ज्ञानधर्मकस्यात्मन एव स्वधर्मभूतज्ञानप्रसरणकर्तृत्वं संभवति न जडस्वरूपस्यातद्धर्मकस्याहङ्कारस्येत्यर्थः । शङ्कते–**जडस्वभावस्येति** । **तच्छायापत्त्या** । चिच्छायापत्त्या । **उक्तरीत्येति** । अचेतनस्य प्रकृतिपरिणामभूतस्याहङ्कारस्य चिच्छायायापि ज्ञातृत्वं न संभवतीत्यर्थः ।

यदप्युक्तम्, उभयत्र वस्तुतो न ज्ञातृत्वमस्ति, अहङ्कारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति, आदर्शादिवदिति। तदयुक्तम्। आत्मनः स्वयंज्योतिषो जडरूपाहङ्काराभिव्यङ्ग्यत्वायोगात्। तदुक्तम् –

'शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्' (आ. सि. पृ. २७) इति।

स्वयम्प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः। तत्र तदायत्तप्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति। किञ्च, अहङ्कारानुभवयोः स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यंक्तृव्यङ्ग्यभावः। तथोक्तम्–

'व्यंक्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे' (आ. सि. २७) इति।

नच रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदः साधीयः। तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात्। करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त– इति तद्बाहुल्यमात्रहेतुत्वात् करतलस्य नाभिव्यञ्जकत्वम्। किञ्च, अस्य संविद्रूपस्यात्मनोऽहङ्कारनिर्वर्त्याभिव्यक्तिः किंरूपा। न तावदुत्पत्तिः। स्वतःसिद्धतयानन्योत्पाद्यताभ्युपगमात्। नापि त-

---

**उभयत्र**। अहङ्कारे संविदि च। **अनुभूतेः**। अनुभूतिस्वरूपस्यात्मनः। **तदुक्तमिति**। आत्मसिद्धावित्यर्थः। **शान्ताङ्गार इति**। यथा शान्ताङ्गार आदित्यं व्यनक्तीति न युक्तिसहं तथेत्यर्थः। **परिहसन्तीति**। ईदृशमनुभवमीदृशोऽहङ्कारोऽभिव्यनक्तीत्युक्तवतस्तव त्वदीया एव हसन्तीत्यर्थः। **स्वभावविरोधादिति**। अनुभवस्याशेषार्थसिद्धिहेतुत्वादहङ्कारस्य तदभावादनुभवाधीनसिद्धित्वाच्च विरोधः। **अननुभूतित्वप्रसङ्गाच्चेति**। विमताऽनुभूतिर्नानुभूतिः व्यङ्ग्यत्वाद्घटवदित्यनुमानेनाननुभूतित्वप्रसङ्ग इत्यर्थः। **व्यङ्क्तृव्यङ्ग्यभावः**। व्यञ्जकव्यङ्ग्यभावः। **प्रातिकूल्यतः**। विरोधात्। **बहुला इति**। न चात्रापि संविद्बाहुल्यहेतुत्वमहङ्कारस्य शङ्कनीयम्। तन्मये महत्स्वरूपायाः संविदः प्रसरणस्वभावत्वाभावात्। **अहङ्कारनिर्वर्त्या**। अहङ्कारेण जायमाना। **किंरूपेति**। उत्पत्तिरूपा प्रकाशनरूपा अनुभवसाधनानुग्रहरूपा वे-

तत्प्रकाशनम् । तस्या अनुभवान्तराननुभाव्यत्वात् । तत एव च न तदनुभवसाधनानुग्रहः । स हि द्विधा, ज्ञेयस्येन्द्रियसम्बन्धहेतुत्वेन वा । यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसम्बन्धहेतुत्वेन । बोद्धृगतकल्मषापनयनेन वा । यथा परतत्त्वावबोधसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम् –

'करणानामभूमित्वान्न तत्सम्बन्धहेतुता' ( आ. सि. पृ. २८ ) इति ।

किञ्च, अनुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः। स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धकनिरसनेन भवेत। यथा रूपादिग्रहणोत्पत्तिविरोधिसन्तमसनिरसनेन चक्षुषो दीपादिना । न चेह तथाविधं निरसनीयं सम्भाव्यते । न तावत् संविदात्मगतं तज्ज्ञानोत्पत्तिविरोधि किञ्चिदप्यहङ्कारापनेयमस्ति । अस्ति ह्यज्ञानमिति चेत् न । अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात् । ज्ञानमेव ह्यज्ञानस्य निवर्त्तकम् । न च संविदाश्रयत्वमज्ञानस्य सम्भवति । ज्ञानसमानाश्रयत्वात् तत्समानविष-

---

त्यर्थः । **तत्प्रकाशनम्** । संविद्रूपात्मविषयकज्ञानोत्पत्तिः । **अननुभाव्यत्वात्** । अविषयत्वात् । **तत एव** । संविद्रूपात्मविषयकज्ञानोत्पत्तेरसंभवादेव । **द्विधेति** । ज्ञेयगतदोषदूरीकरणद्वारा ज्ञातृगतदोषदूरीकरणद्वारा चेत्याशयः । तदेवाह–**ज्ञेयस्येति**। **अभूमित्वात्** । अविषयत्वात् । संविद्रूपस्यात्मन इन्द्रियाविषयत्वान्नाहङ्कारस्य संविज्ज्ञानजनकेन्द्रियसंबन्धहेतुत्वं नापि बोद्धृगतकल्मषापनयहेतुत्वमिति भावः ।

**अनुभाव्येति** । अनुभाव्या या अनुभूतिस्तस्या योऽनुभवस्तदुत्पत्तौ यत्प्रतिबन्धकं तन्निरसनमहङ्कारः करोतीत्यर्थः । परं त्वेतादृशं किंचित्प्रतिबन्धकमेवात्र न संभवतीत्याशयः । **संतमसम्** । गाढान्धकारः । **संविदात्मगतमिति** । संविद्रूपो य आत्मा ज्ञेयत्वेनाभिमतस्तन्निष्ठमित्यर्थः । **अस्ति हीति** । संविदाश्रयमज्ञानमेव प्रतिबन्धकमिति शङ्काशयः । अज्ञानस्य संविदाश्रयत्वासंभवेऽपि तुष्यतु दुर्जनन्यायेन तत्स्वीकृत्य प्रकारान्तरेण दूषयति–**अज्ञानस्येति** । **संविदाश्रयत्वमिति** । संविन्निष्ठत्वं संविद्विषयकत्वं चेत्यर्थः । **ज्ञानसमानेति** । यो हि ज्ञानाश्रयो भवति स एव कालविषयादिभेदेनाज्ञानाश्रयो भवति नान्यो ज्ञातृभावरहितो घटादिः । तथा च संविदो ज्ञातृभावरहितत्वेन न तन्निष्ठत्वमज्ञानस्य संभवतीत्यर्थः । **तत्समानेति** । ज्ञानसमानेत्यर्थः । यो हि ज्ञानस्य विषयो भवति स एव कालज्ञात्रादिभेदेनाज्ञा-

त्वाच्च । ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं सम्भवितुमर्हति । यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वं, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात् । संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाभ्युपेतायास्तस्या ज्ञानविषयत्वाभावेन, ज्ञानेन न तद्गताज्ञाननिवृत्तिः । ज्ञानं हि स्वविषय एवाज्ञानं निवर्त्तयति । यथा रज्ज्वादौ । अतो न केनापि कदाचित्संविदाश्रयमज्ञानमुच्छिद्येत । अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते । ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः । अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः ।

न च, स्वाश्रयतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । प्रदीपादिष्वदर्शनात् । यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च । तच्च स्वतःप्रामाण्यं न्यायसिद्धम् ।

---

नस्य विषयो भवति नान्यो ज्ञानाविषये वन्ध्यापुत्रादिः । तथा च संविदो ज्ञानविषयभावरहितत्वेन न तद्विषयत्वमज्ञानस्य संभवतीत्यर्थः । अथ संविदोऽज्ञानविषयत्वमभ्युपेत्यापि दूषणमाह—**संविद इति** । **स्वविषय एवेति** । यद्यविषयेऽप्यज्ञाननिवृत्तिस्तर्हि शुक्तिज्ञानेनापि सर्वभ्रमनिवृत्तिः स्यात् । किंचाहङ्कारापनोद्यत्वेनोक्तमेतदज्ञानं किं सदसदनिर्वचनीयं ज्ञानप्रागभावरूपं वा । आद्ये आह—**अस्य चेति** । अन्त्ये आह—**ज्ञानप्रागभावेति** । **उत्पत्तिविरोधित्वाभावेन** । उत्पत्तिप्रतिबन्धकत्वाभावेन । न हि घटप्रागभावो घटोत्पत्तिं प्रतिबध्नाति ।

**स्वाश्रयतयेति** । चतुर्थ्यर्थे तसिल् । **यथावस्थितेति** । ज्ञानस्य चाक्षुषादेस्तत्साधनस्येन्द्रियादेरनुग्राहकस्य चालोकादेरीदृश एव स्वभावः । ज्ञानस्य स्वतःप्रमाणत्वात् । यथावस्थितपदार्थप्रतीतिजनकत्वमेव प्रमाणत्वं तच्च स्वत एवेति ज्ञानस्य तादृशस्वभावः सिध्यति । ज्ञानस्य तादृशस्वभावत्वे च तत्साधनानुग्राहकयोरपि तादृशस्वभावत्वमर्थादेव सिध्यतीत्यर्थः । **न्यायसिद्धमिति** । यथा जले उष्णस्पर्शस्य न स्वतस्त्वं किं तु परतस्त्वम् । तस्य स्वतस्त्वं तु तेजसि प्रसिद्धम् । तथा ज्ञाने प्रमाणत्वस्य यदि परतस्त्वं स्यात्तर्हि तस्यान्यत्र क्वचिदपि स्वतस्त्वमावश्यकम् । तच्च न संभवति । प्रमाणत्वस्य ज्ञानमात्रनियतत्वात् । अतस्तस्य ज्ञाने स्वतस्त्वमेवाङ्गीकार्यम् ।

न च, दर्पणादिर्मुखादेरभिव्यञ्जकः । अपि तु, चाक्षुषतेजः–प्रतिफलनरूपदोषहेतुः । तद्दोषकृतश्च तत्रान्यथावभासः । अभिव्यञ्जकस्त्वालोकादिरेव । न चेह तथाहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं सम्भवति । व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः । न तु व्यक्तिव्यङ्ग्यत्वात् । अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किञ्चिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं, तथोपलब्धिर्वा । तस्मात् स्वत एव ज्ञातृतया सिध्यन्नहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम् । अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम् । तमोगुणाभिभवात् परागर्थानुभवाभावाच्च अहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्याप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात्सुषुप्तावपि नाहं-

---

अप्रमाणत्वस्य तु परतस्त्वमेव । प्रमाणत्वा-प्रमाणत्वयोः परस्परविरुध्ययोरेकत्र स्वतस्त्वायोगात् । अप्रमाणत्वस्य प्रमाणत्वाभावरूपत्वेन तस्य ज्ञानव्यतिरिक्तस्थलेषु च दृष्टत्वात् । न च वैपरीत्यं किं न स्यादिति वाच्यम् । प्रायोदर्शनं हि स्वाभाविकत्वे तन्त्रम् । ज्ञाने च प्रमाणत्वमेव प्रायो दृश्यते इति तदेव तत्र स्वाभाविकम् । अप्रमाणत्वं तु इदं रजतमित्यादौ क्वचिद्दृश्यते । तत्रापि च रजतांशस्यैवाप्रमाणत्वं नेदमंशस्येत्यंशयोरिति अप्रमाणत्वस्य क्वाचित्कतरत्वात्तस्यैव नैमित्तिकत्वमिति बोध्यम् । ननु प्रदीपादिष्वदर्शनादित्यसिद्धो हेतुः । दर्पणे व्यक्तौ च दर्शनादिति चेत्तत्राह—**न चेति । तद्दोषेति** । अन्यथाज्ञानहेतुत्वादेव प्रतिफलनस्य दोषत्वमिति भावः । **वस्तुत इति** । यथा जातेर्व्यक्तिनिष्ठत्वेनोपलब्धिर्भवति । तस्याः कारणं वस्तुतस्तयोर्धर्मधर्मिभावः । मुखस्य दर्पणनिष्ठत्वेनोपलब्धिर्भवति । तस्याः कारणं दोषतः प्रतिफलनम् । तथाहङ्कारनिष्ठत्वेन या संविदुपलब्धिर्भवति तस्याः कारणं किंचिन्न संभवतीत्यर्थः । ननु ज्ञानस्य प्रत्यक्त्वात्तस्यैवात्मत्वमस्त्वित्यत आह—**अहंभावेति** । ज्ञानेऽहंभावाभावेन स्वस्मै प्रकाशमानत्वरूपप्रत्यक्त्वाभावान्न प्रत्यक्त्वं ज्ञानस्यात्मत्वसाधकं किं तु अहंताविशिष्टस्य ज्ञातुरेवेत्यर्थः । सुषुप्तावप्यस्फुटोऽहम्भावोऽस्त्येव । तमेव साधयति—**तमोगुणेति । परागर्थः** । इदमर्थः । तस्यानुभवाभावेनाहमर्थस्येतरव्यावृत्तत्वेन किंचिद्विशेषणविशिष्टत्वेन च प्रतिभासो न भवति । इतरव्यावृत्तत्वेन प्रतिभास एव विविक्तप्रतिभासः । विशेषणविशिष्टत्वेन प्रतिभास एव स्फुटावभासः । ननु यदि सुषुप्तावहम्भावोऽस्फुटस्तर्हि तदस्तित्वे किं प्रमाणमिति चेद्बहुसंमतानुभूता-

भावविगमः । भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम् । न हि, सुप्तोत्थितः कश्चिदहंभाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयावतिष्ठे—इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं हि सुप्तोत्थितस्य परामर्शः, सुखमहमस्वाप्समिति । अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते । न च वाच्यं, यथेदानीं सुखं भवति, तथा तदानीमस्वाप्समित्येषा प्रतिपत्तिरिति । अतद्रूपत्वात्प्रतिपत्तेः । न चाहमर्थस्यात्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसन्धानानुपपत्तिः । यतः सुषुप्तिदशायाः प्रागनुभूतं वस्तु, सुप्तोत्थितो मयेदं कृतं मयेदमनुभूतमहमेवेदमवोचमिति परामृशति । एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च परामृशतीति चेत् —ततः किम् । न किञ्चिदिति कृत्स्नप्रतिषेध—इति चेन्न । अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तेः । वेद्यविषयो हि स प्रतिषेधः । न किञ्चिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् । सुषुप्तिस-

---

वपि तुल्यमेतदित्याह—**भवदिति** । यथा तव ज्ञातृज्ञेयसंबन्धाभावेन ज्ञानस्य सुषुप्तावस्फुटावभासस्तथा ममापि इदमर्थानुभवाभावेनाहमर्थस्यास्फुटावभास इत्याशयः । **अहम्भावावियुक्ता** । ज्ञातृसंबन्धरहिता । **अर्थान्तरप्रत्यनीकाकारा** । ज्ञेयादिसमस्तविशेषरहिता । **ज्ञप्तिरहमिति** । अत्राहंशब्दोपादानं प्रत्यक्त्वसिध्यर्थम् । तथाच परपक्षानुगुणः परामर्शो नास्तीति सिद्धम् । अथ स्वपक्षानुगुणं परामर्शं दर्शयति—**एवं हीति** । **यथेदानीमिति** । पूर्वं कृतात्स्वापादिदानीमहं सुखमनुभवामीत्येव सुखमहमस्वाप्समितिपरामर्शस्यार्थो न तु स्वापकाले इति शङ्काशयः । उत्तरयति—**अतद्रूपत्वादिति** । सुखमहमस्वाप्समिति—वाक्यात्स्वरसतस्त्वदुक्तार्थाप्रतीतेः । न हि मन्दमगच्छमिति—वाक्यादिदानीं यथा मान्द्यं भवति तथा पूर्वमगच्छमित्यर्थः प्रतीयत इति भावः । शङ्कते—**न चेति** । स्वरसतः प्रतीतोऽप्यर्थो नोपपद्यते । अहमर्थस्यात्मनोऽस्थिरत्वात् । अतःसोऽर्थस्त्याज्य एवेत्याशयः । उत्तरयति—**यत इति** । कृतमिति कायिकः परामर्शः । अनुभूतमिति मानसः । अवोचमिति वाचिकः । एभिः परामर्शैरात्मनः स्थिरत्वमेव सिध्यतीति स्वारसिकार्थस्य न काचिदनुपपत्तिरिति भावः । पुनः शङ्कते—**एतावन्तमिति** । उत्तरयति—**ततः किमिति** । अहमर्थो न निषेधविषय इत्याशयः । अमुमाशयमजानानः शङ्कते—**न किंचिदिति** । परिहरति—**नेति** । **सुषुप्ति-**

मयेऽप्यनुसन्धीयमानमहमर्थमात्मानं ज्ञातारमहमिति परामृश्य, न किञ्चिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने, तस्मिन् काले प्रतिषिध्यमानाया वित्तेः सिद्धिमनुवर्त्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव न किञ्चिदहमवेदिषमिति परामर्शेन साधयंस्तमिममर्थं देवानामेव प्रियः साधयतु। मामप्यहं न ज्ञातवानित्यहमर्थस्यापि तदानीमननुसन्धानं प्रतीयते—इति चेत्, स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। अहं मां न ज्ञातवानिति ह्यनुभववचने, मामिति किं निषिध्यते—इति चेत्, साधु पृष्टं भवता। तदुच्यते। अमहर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते। अपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्यवर्णाश्रमादिविशिष्टता। अहं मां न ज्ञातवानित्युक्तेर्विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वापावस्थाप्रसिद्धोऽविशदस्वानुभैवकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। अत्र, सुप्तोऽहमीदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः।

किञ्च, सुषुप्तावात्मा अज्ञानसाक्षित्वेनास्ते—इति हि भवदीया प्रक्रिया। साक्षित्वञ्च साक्षात् ज्ञातृत्वमेव। न ह्यजानतः साक्षित्वम्। ज्ञातैव लोकवेदयोः साक्षीति व्यपदिश्यते, न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः 'साक्षाद्द्रष्टरि संज्ञायाम्' (पा. सू. ५।२।९१) इति साक्षात् ज्ञातर्ये-

---

**समयेऽपीति**। अहं न किंचिदवेदिषमिति—परामर्शेऽहमर्थो न प्रतिषिध्यते। अहंशब्देन तस्य परामर्शेन तदानीं तस्यानुवर्तमानत्वात्। किं तु तदीयवेदनमेव प्रतिषिध्यते। भवांस्त्वनेनैव परामर्शेन प्रतिषिध्यमानस्यापि वेदनस्य सिद्धिं कल्पयसि। अनुवर्तमानस्याप्यहमर्थस्यासिद्धिं कल्पयसीति विरुद्धं वदन्देवानां प्रियो मूर्ख एवासीत्यर्थः। 'देवानामेव साधयतु' इति पाठे देवाः प्रतिवचनं न ददतीति तदग्रे एव भवान्यथेच्छं वदतु न तु ममाग्रे इत्यर्थः। शङ्कते—**मामपीति**। परिहरति—**स्वानुभवेति**। अनुभवानुसारेण न ब्रवीषीत्यर्थः। पुनःशङ्कते—**अहमिति**। **तदुच्यत इति**। अहंशब्देन कस्यानुवृत्तिः मामित्यनेन च कस्य निषेधस्तदुच्यत इत्यर्थः।

**साक्षाद्द्रष्टरीति**। साक्षाच्छब्दादिनिप्रत्ययो भवति द्रष्टर्यर्थे गम्यमाने संज्ञायां म-

व साक्षिशब्दम् । सचायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत । आत्मने स्वयमवभासमानोऽहमित्येवावभासते--इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासते--इति सिद्धम् ।

यत्तु, मोक्षदशायामहमर्थो नानुवर्त्तते--इति । तदपेशलम् । तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रं, येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूपमेवाहमर्थः आत्मनः । ज्ञानन्तु तस्य धर्मः । अहं जानामि ज्ञानं मे जातमिति चाहमर्थधर्मतया ज्ञानप्रतीतिरेव । अपि च, यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदुःखैर्दुःखितयात्मानमनुसन्धत्ते--अहं दुःखीति, सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयमित्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्त्तते । स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेत्, अपसर्पेदेवासौ मोक्षकथाप्रस्तावात् । ततश्चाधिकारिविरहादेव

---

त्यामिति सूत्रार्थः । साक्षाद्द्रष्टा साक्षी इत्युदाहरणम् । **आत्मने स्वयमिति** । सुषुप्तौ भासमान आत्मा अहमित्येव भासते स्वस्मै प्रकाशमानत्वात् जाग्रदात्मवदित्यनुमानमनेन सूचितम् ।

**तथा सतीति** । ज्ञानसंतत्युच्छेद एव मोक्ष इति बौद्धमतं स्वरूपनाशस्यापुरुषार्थत्वेन दूषयता त्वयापि शब्दान्तरेण स्वरूपनाश एवोक्त इति भावः । **ज्ञानप्रतीतिरेवेति** । एवं च मोक्षे ज्ञानरूपधर्मस्य सत्वेन तद्धर्मिणोऽहङ्कारस्यापि सत्वमङ्गीकार्यमिति सिद्धम् । प्रत्युत तदनङ्गीकारे बाधकमाह--**अपि चेति** । **भ्रान्त्या वेति** । यथा वास्तविकदुःखे दुःखिनः स्वदुःखनाश एवापेक्ष्यते न तु स्वविनाशः । तथा दुःखभ्रमेपि द्विचन्द्रज्ञानादिभ्रान्तिमतः स्वभ्रमनाश एवापेक्ष्यते न तु स्वविनाश इति भावः । **आध्यात्मिकादीति** । आदिशब्देनाधिभौतिकाधिदैविकयोः संग्रहः । आध्यात्मिकं द्विविधं शारीरं मानसं च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं कामक्रोधादिनिमित्तम् । आधिभौतिकं मानुषपशुपक्षिसर्पस्थावरादिनिमित्तम् । आधिदैविकं यक्षराक्षसग्रहाद्यावेशनिमित्तम् । **अपुनर्भवमिति** । अपोह्येतिक्रियाविशेषणमेतत् । न पुनर्भवः पुनरुत्पत्तिर्यत्रेत्यर्थः । **अनाकुलः** । आगामिदुःखशङ्कया मनःक्षोभ आकुलत्वं तद्रहितः । **अपसर्पेदेवेति** । तथा च मोक्षमार्गप्रवृत्त्यन्यथानुपप-

सर्वं मोक्षशास्त्रमप्रमाणं स्यात् । अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठते—इति चेत् । किमनेन । मयि विनष्टेऽपि किमपि प्रकाशमात्रमवतिष्ठते—इति मत्वा न हि कश्चिद्बुद्धिपूर्वमधिकारी प्रयतते । अतोऽहमर्थस्यैव ज्ञातृतया सिध्यतः प्रत्यगात्मत्वम् ।

स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते । स्वस्मै प्रकाशमानत्वात् । यो यः स्वस्मै प्रकाशते, स सर्वोऽहमित्येव प्रकाशते यथा, तथावभासमानत्वेनोभयवादिसम्मतः संसार्यात्मा । यः पुनरहमिति न चकास्ति, नासौ स्वस्मै प्रकाशते—यथा घटादिः । स्वस्मै प्रकाशते[१] चायं मुक्तात्मा । स तस्मादहमित्येव प्रकाशते । न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः । मोक्षविरोधादज्ञत्वाद्यहेतुत्वाच्चाहंप्रत्ययस्य । अज्ञानं नाम, स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययो नाज्ञत्वमापादयति, कुतः संसारित्वम् । अपि तु तद्विरोधित्वान्नाशयत्येव । ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि, 'तद्धैतत् पश्य-

---

स्या मोक्षेऽहमर्थोऽनुवर्तत एवेत्यर्थापत्तिप्रमाणेन सिद्धमिति भावः । शङ्कते—**अहमिति** ।

अनुमानमाह—**स चेति** । **संसारित्वादीति** । आदिशब्देन रागद्वेषदुःखादिसंग्रहः । **मोक्षविरोधादिति** । मोक्षेण सहाज्ञत्वादीनां विरोधान्न तत्प्रसङ्ग इत्यर्थः । तथा च श्रुतिः । 'न पश्यो मृत्युं पश्यति न रोगं नोतदुःखताम्' ( छां. ७।२६।२ ) इति । कार्यस्य च कारणव्यापकत्वमस्त्येवेति न नियमः । न हि घटस्य दण्डव्यापकत्वं दृश्यते इत्यहम्भावे सत्यपि न तत्कार्यस्याज्ञत्वादेः प्रसक्तिरिति बोध्यम् । अथ कार्यकारणभावोऽपि नास्तीत्याह—**अज्ञत्वादीति** । संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण कार्यकारणभावस्वीकारे त्वन्मतेऽपि संसारित्वानुभवयोस्तथात्वापत्तिः । अहंप्रत्ययस्याज्ञत्वाद्यहेतुत्वमुपपादयति—**अज्ञानमिति** । क्वचित्केवलं स्वरूपाज्ञानम् । यथा तमसि घटादेः । क्वचित्तु तत्पूर्वकमन्यथाज्ञानम् । यथा पीतः शङ्ख इति । अत्र पाण्डुरत्वविशिष्टशङ्खस्वरूपस्याज्ञानं वर्तत एव । क्वचिच्च तत्पूर्वकं विपरीतज्ञानम् । यथा शुक्काविदं रजतमिति । **तत** । अज्ञत्वम् । **ब्रह्मेति** । ब्रह्मात्मभावस्यापरोक्षेण प्रत्यक्षेण निर्धूता निरवशेषा समग्राऽविद्या येषामित्यर्थः । ब्रह्मणोऽपि तथा

---

१ क. तस्मै स्वयं प्रका.　२ ख. ते तथा चा.

नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्चेति ' ( बृ. १।४।१० ) अहमेव च संवर्त्तामि भविष्यामीत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव, ' हन्ताहमिमास्तिस्रो देवताः ' ( छां. ६।३।२ ) ' बहु स्यां प्रजायेय ' ( छां. ६।२।३ )' स ऐक्षत लोकान्नु सृजै ' ( ऐ. १।१ ) इति । तथा–

' यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ' ( गी. १५।१८ )

'अहमात्मा गुडाकेश' (गी. १०।२०) 'न त्वेवाहं जातु नासम्' ( गी.२।१२ )

' अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ' ( गी. ७।६ )
' अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ' ( गी. १०।८ )
' तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ' ( गी.१२।७ )

' अहं वीजप्रदः पिता ' ( गी. १४।४ ) ' वेदाहं समतीतानि ' ( गी. ७।२६ ) इत्यादिषु । यद्यहमित्येवात्मनः स्वरूपम् , कथं तर्ह्यहंकारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते–

' महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ' ( गी. १३।५ ) इति ।

उच्यते। स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेः

---

प्रतिपत्तिमाह–**सकलेति**। अज्ञानविरोधिनो नाज्ञानवश्यत्वमिति भावः ।न हि विषहन्तुर्गरुडस्य विषवश्यत्वं दृश्यते । **सच्छब्देति** । सच्छब्दः सदिति प्रत्ययश्च तन्मात्रभाजः । मात्रचा नामरूपव्यावृत्तिः । **एवमेव** । अहंप्रत्ययघटित एव । **तिस्रो देवताः** । तेजोबन्नरूपाः अनुप्रविश्य नामरूपे व्याकरवाणीत्यर्थः । एषु श्रुतिस्मृतिवाक्येष्वहंशब्देन चिन्मात्रमुपलक्ष्यते इति चेल्लक्षणैव दोषः । अनेकवचनोपादानं ' महाभूतान्यहङ्कारः ' ' अहङ्कारं बलं दर्पम् ' इत्यादि परमतोपपादकद्वित्रिवचनापेक्षयाधिक्यद्योतनार्थम् । **क्षेत्रान्तर्भाव इति** । ' इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ' इति पूर्वमुक्त्वा तादृशशरीररूपक्षेत्रेऽहङ्कारस्यान्तर्भावः कृतः । अहङ्कारस्यात्मस्वरूपत्वे तु स न संभवतीत्याशयः । **उच्यत इति** । अहंभावोऽहङ्कारश्च भिन्नः । तत्राहंभाव एवात्मस्वरूपम् । अहं अहंभावं करोत्यनेनेत्यहङ्कारः । अभूततद्भावे च्विप्रत्ययः । अनेन ह्यहङ्कारेणानहंभूतेऽनात्मभूते देहादावहंबुद्धिरुत्पद्यते । **अयमहङ्कार** एव क्षेत्रान्तर्भूतो नाहंभाव इति भावः । **अहमित्येव** । नत्वहङ्कार इति ।

श्चाहमित्येव प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते स त्वनात्मनि देहेऽहम्भावकरणहेतुत्वेनाहङ्कार—इत्युच्यते । अस्य त्वहङ्कारशब्दस्याभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते । तस्माद्बाधकापेताहम्बुद्धिः साक्षादात्मगोचरैव । शरीरगोचरा त्वहम्बुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण—

श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्येति (वा. नं.) ।

यदि ज्ञप्तिमात्रमेवात्मा तदानात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्, न ज्ञातृत्वप्रतिभासः । तस्माज्ज्ञाताहमर्थ एवात्मा । तयोक्तम्,

अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताहमिति भासते (आ. सि. पृ. ३२) इति ।

तथा च—

देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी (आ. सि. पृ. ६) इति ।

अनन्यसाधनः—स्वप्रकाशः । व्यापी—अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः ।

---

**शास्त्रेषु** । 'अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः' (गी. १६।१८) इत्यादिषु । तत्र द्विषतादृशान्नराधमान्संसारेषु क्षिपामीत्यग्रे उच्यते इति तेषामहङ्कारादीनां हेयत्वमर्थात्सिध्यति । **बाधकापेता** । बाधकरहिता । उक्तार्थे आत्मसिद्धिग्रन्थमुदाहरति—**अत इति** । प्रत्यक्षसिद्धत्वं धर्मधर्मिभावेन प्रतीतत्वम् । उक्तन्यायः । अर्थापत्तिः । आगमः । उक्तश्रुतिवाक्यानि । अविद्यायोगः । समनन्तरोक्ता शरीरे ज्ञातृत्वभ्रान्तिः । ज्ञानस्यानात्मत्वे चात्मसिद्धिग्रन्थमुदाहरति—**देहेन्द्रियेति** । अत्र धियोऽन्यत्वमात्मनः स्पष्टमेवोक्तम् ।

यदुक्तम् ( पृ. ३३ ) दोषमूलत्वेनान्यथासिद्धिसम्भावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति। कोऽयं दोष–इति वक्तव्यम्, यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः। अनादिभेदवासनैव हि दोष–इति चेत्, भेदवासनायास्तिमिरादिवत् यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम्। अनेनैव शास्त्रविरोधेन ज्ञास्यते–इति चेन्न। अन्योऽन्याश्रयणात्। शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयो, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय–इति। किञ्च, यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं, शास्त्रमपि तन्मूलत्वेन तथैव स्यात्। अथोच्येत दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्, तत् प्रत्यक्षस्य बाधकमिति। तन्न। दोषमूलत्वे ज्ञाते सति परत्वमकिञ्चित्करम्। रज्जुसर्पज्ञाननिमित्तभये सति, भ्रान्तोऽयमिति परिज्ञातेन केनचिन्नायं सर्पो मा भैषीरित्युक्तेऽपि भयानिवृत्तिदर्शनात्। शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम्। श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः। अपिचेदं शास्त्रमसम्भाव्यमानदोषम्, प्रत्यक्षन्तु सम्भाव्यमानदोषमिति केनावगतं त्वया। न तावत् स्वतः-

---

**शास्त्रबाध्यत्वमिति।** अद्वैतशास्त्रेण भेदप्रत्यक्षस्य बाध्यत्वमित्यर्थः। **तिमिरादीति।** आदिशब्देन सादृश्यं गृह्यते। तद्धि ज्वालायामैक्यभ्रमहेतुः। **तन्मूलत्वेनेति।** ब्रह्मव्यतिरिक्तस्य सर्वस्य भेदवासनामूलत्वेन शास्त्रस्यापि तत्वं बोध्यम्। भेदवासनामूलत्वेन असत्यमेव शास्त्रं सत्यस्य ब्रह्मज्ञानस्य सूचकमिति मृषावादिनो मतम्। **परत्वादिति।** निषेध्योपस्थापकप्रत्यक्षप्रमाणापेक्षया तन्निषेध्यसापेक्षस्य निषेधकशास्त्रस्य पश्चादुपास्थितिकत्वेन परत्वम्। नेदं रजतमिति परज्ञानस्येदं रजतमिति पूर्वज्ञानबाधकत्वं दृष्टमेव। **भ्रान्तोऽयमितीति।** नायं सर्प इति वदतो वस्तुतो भ्रान्तत्वाभावेऽपि इतरेण स 'भ्रान्त' इति ज्ञात इत्यर्थः। **भयानिवृत्तीति।** उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयाद्भयानिवृत्तिः। **श्रवणावगतेति।** शास्त्रस्य भेदवासनामूलत्वं हि तावत्संप्रतिपन्नम्। तस्याश्च दोषत्वं भेदमिथ्यात्वज्ञानादवगम्यते। तन्मिथ्यात्वावगतिर्ज्ञाननिवर्त्यत्वावगमात्। तन्निवर्त्यत्वावगमश्च ब्रह्मात्मैकत्वज्ञा-

सिद्धा निर्धूतनिखिलविशेषानुभूतिरिममर्थमवगमयति । तस्याः सर्वविषय-विरक्तत्वात् । शास्त्रपक्षपातविरहाच्च । नाप्यैन्द्रियकं प्रत्यक्षम् । दोषमूलत्वेन विपरीतार्थत्वात् । तन्मूलत्वादेव नान्यान्यपि प्रमाणानि । अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः ।

ननु, व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव । कोऽयं व्यावहारिको नाम । आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथावस्थित– इति चेत्, किन्तेन प्रयोजनम् । प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्य्याभावात् । अथोच्येत, शास्त्रप्रत्यक्षयोर्द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते । शास्त्रविषयस्य सदद्वितीयस्य ब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ–इति । तदयुक्तम् । अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् । एतदुक्तं भवति । यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानम-

---

नस्य निखिलभेदोपमर्दित्वावगतेः । अत ईदृशनिवर्तकज्ञानाभ्यासरूपमननं कुर्वता शास्त्रस्य दोषमूलत्वमवगतमित्यर्थः । **सर्वविषयविरक्तत्वादिति** । निर्विषयत्वादित्यर्थः । न हि ज्ञानं स्वाविषयं प्रकाशयतीति भावः । **नापीति** । ऐन्द्रियकं प्रत्यक्षमपि इममर्थं नावगमयतीत्यर्थः । **दोषमूलत्वेन** । भेदवासनारूपदोषमूलत्वेन । **तन्मूलत्वादेव** । इतरप्रमाणानां प्रत्यक्षमूलत्वादेव । **प्रमाणानीति** । इममर्थमवगमयन्तीति संबन्धः ।

**यौक्तिकबाधादेवेति** । युक्त्या बाधो यौक्तिकबाधः । धूमबुध्या गृहीतस्य वायोर्वन्हिनिश्चयहेतुत्वादर्शनात् । **अथोच्येतेति** । प्रत्यक्षेण ज्ञातस्य घटादेः शास्त्रेण पश्चाद्बाधो दृश्यते । एवं शास्त्रेण ज्ञातस्य ब्रह्मणो न केनापि पश्चाद्बाधो दृश्यते । तादृश ब्रह्मैव परमार्थ इत्याशयः । **काचादीति** । काचो नेत्ररोगः । 'काचबिन्दु' इति प्रसिद्धः । आदिना कामल ( कावीळ इति प्र. ) संग्रहः । **पुरुषान्तरागोचरेति** । अनेन द्विचन्द्रज्ञानस्य परतोऽबाधितत्वं सूच्यते । **तैमिरिकजनस्येति** । तिमिराख्यनेत्ररोगविशेषविशिष्टजनस्येत्यर्थः । **अज्ञातस्वतिमिरस्येति** । अनेन स्वतोऽप्यबाधितत्वं सू-

---

१ ( ख ) 'पुरुषागोचर.'

विशिष्टं जायते। तत्र न बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतश्चन्द्रद्वित्वमपि मिथ्यैव। दोषोह्ययथार्थज्ञानेहेतुः। तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैवेति। भवन्ति चात्र प्रयोगाः। विवादाध्यासितं ब्रह्म मिथ्या, अविद्यावदुत्पन्नज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या, मिथ्याज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात् प्रपञ्चवदेव।

न च वाच्यम्, स्वप्नस्य हस्त्यादिज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध–इति। स्वप्नज्ञानस्यासत्यत्वाभावात्। तत्र हि, विषयाणामेव मिथ्यात्वम्। तेषामेव हि बाधो दृश्यते, न ज्ञानस्य। न हि मया स्वप्नवेलायामनुभूतं ज्ञानमिह न विद्यत–इति कस्यचिदपि प्रत्ययो जायते। 'दर्शनन्तु विद्यते, अर्था न सन्ति' इति बाधकप्रत्ययः। मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतिर्भयस्य च हेतुः। तत्रापि ज्ञानस्याबाधितत्वात्। विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः। सत्यैवादष्टेऽपि स्वात्मनि सर्पसन्नि-

---

श्यते। **तत्र**। द्विचन्द्रज्ञानम्। मिथ्या न, भवतीति न किं तु मिथ्यैवेत्यर्थः। एवमेव पशुपक्ष्यादीनां देहात्मज्ञानं तद्दृष्ट्याऽबाधितमपि मिथ्यैवेत्यप्यत्र दृष्टान्तत्वेन योजनीयम्। **अविद्यामूलत्वेन**। अविद्याजन्यभेदवासनामूलकशास्त्रजन्यत्वेन। **अविद्यावदिति**। अविद्याऽस्ति यस्य तदविद्यावत् शास्त्रम्। प्रयोजकत्वं पञ्चम्यर्थः। अविद्यामूलकशास्त्रोत्पन्नज्ञानविषयत्वादित्यर्थः। **असत्येति**। असत्यो यः शास्त्ररूपो हेतुस्तज्जन्यज्ञानविषयत्वादित्यर्थः।

नन्वयमसिद्धो हेतुः। यतोऽसत्यस्यापि सत्योत्पत्तिहेतुत्वं दृश्यत इत्याशयेनाशङ्कते– **न चेति**। परिहरति–**स्वप्नज्ञानस्येति**। **दर्शनं तु**। ज्ञानं तु। **अर्थाः**। विषयाः। **मायामयं** मिथ्याविषयकम्। **सत्यमेवेति**। मन्त्रौषधादीनां ज्ञानकारणानां सत्यत्वात्। **विषयेन्द्रियादीति**। विषयदोषः सादृश्यादिः। इन्द्रियदोषः काचादिः। आदिशब्देन दूरत्वादिदोषसंग्रहः। न चासत्याद्दोषात्कथं सत्यज्ञानोत्पत्तिरिति वाच्यम्। दोषस्यासत्यत्वाभावात्। **सत्यैवेति**। सर्पसन्निधानं कारणं सत्यम्। दृष्टबुद्धिश्च सत्यैव।

धानात् दृष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता। वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः। एतेषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते। हस्त्यादीनामभावे कथं तद्बुद्धयः सत्या भवन्तीति चेत–न। एतद्बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्। प्रतिभासमानता चास्त्येव दोषवशात्। स तु बाधितोऽसत्य- इत्यवसीयते। अबाधिता हि बुद्धिः सत्यैवेत्युक्तम्। रेखया वर्णप्रतिपत्तावपि नासत्यात् सत्यबुद्धिः। रेखायाः सत्यत्वात्। ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः। वर्णात्मता त्वसत्या। नैवम। वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नश्च। अथ तस्यां वर्णबुद्धेरुपायत्वम्। एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्यात्। बुद्धेः सत्यत्वादेव। उपायोपेययोरैक्य-

---

दंशः परमसत्योऽस्तु नामेति भावः। **वस्त्विति**। जलादि सत्यम्। तत्कृतचाक्षुषतेजःप्रतिघातश्च सत्य एव। **उत्पत्तिमत्त्वादिति**। न हि असत्यं शुक्तिरजतमुत्पत्तिमत्। नापि कार्यकरमिति भावः। ननु स्वप्नादौ ज्ञानकारणीभूतानां हस्त्यादीनां विषयाणामसत्यत्वे कथं तस्मात्सत्यज्ञानोत्पत्तिरित्याशयेनाशङ्कते–**हस्त्यादीनामिति**। परिहरति–**नेति**। **सालम्बनत्वमात्रेति**। स्वविषयमात्रेत्यर्थः। न तु तस्य विषयस्य सत्यत्वापेक्षेति भावः। मिथ्याभूतस्य कथं विषयत्वमित्यत्राह–**अर्थस्येति**। **प्रतिभासमानता चेति**। प्रतिभासमानतायाः सत्यो दोष एव कारणं नासत्यो विषय इत्यर्थः। विषयस्यैव कथमसत्यत्वं न तु दोषस्येत्याह–**सत्विति**। अर्थास्त्वित्यर्थः। एवं चोत्पत्तिहेतुत्वं ज्ञानहेतुत्वं च सत्यस्यैवेति सिद्धम्। **उपायत्वायोगात्**। वर्णबुद्धिहेतुत्वायोगात्। **निरुपाख्यस्य**। तुच्छस्य वन्ध्यापुत्रादेः। **अथेति**। वर्णबुद्धिहेतुत्वेन प्रतिपादिता या वर्णात्मना प्रतिपन्ना रेखा तस्यामस्त्यंशद्वयम्। वर्णात्मता तद्रूपेण बुद्धिश्च। तत्र प्रथमांशस्यासत्यत्वेन हेतुत्वासंभवेऽपि द्वितीयांशस्य सत्यत्वात्तस्यैव हेतुत्वमङ्गीक्रियते इति शङ्काशयः। परिहरति–**एवं तर्हीति**। असत्यात्सत्योत्पत्तिसिध्यर्थं हि त्वया रेखोदाहरणं प्रदर्शितम्। तत्रापि त्वदुक्तरीत्या असत्यात्सत्यबुद्धिर्नोत्पद्यते। कारणभूताया बुद्धेः सत्यत्वादेवेत्यर्थः। **उपायेति**। वर्णबुद्धिरूपद्वितीयांशस्यैव कारणत्वे कार्यकारणयोरैक्यप्रसङ्गः। वर्णबुद्धेरेव कार्यत्वादितिभावः। अथ प्रथमांशस्यैव का-

---

१ (ख) बुद्धिःस्मरण.

प्रसङ्गश्च। उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मना उपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात् सर्ववर्णप्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसङ्केतवत् चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशात् रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति। हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः। रेखायाः सङ्केतस्य च सत्यत्वात्। रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना। सादृश्यञ्च सत्यमेव। न चैकरूपस्य शब्दस्य नादविशेषेणार्थविशेषभेदबुद्धिहेतुत्वेऽप्यसत्यात् सत्यप्रतिपत्तिः। नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैः सह सम्बन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात्। शब्दस्यैकरूपत्वमपि न साधीयः। गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्। अतोऽसत्याच्छास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा।

ननु, न शास्त्रस्य गगनकुसुमवदसत्यत्वम्। प्रागद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात्। उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य। न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः। यदोपायस्तदाऽस्त्येव 'शास्त्रमस्ति' इति बुद्धिः। नैवम्। असति शास्त्रे, अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात्। ततः किम्। इदम्। ततो मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्। यथा, धूमबुद्ध्या गृहीतबाष्पजन्या-

---

रणत्वे दूषणान्तरमाह—**रेखाया इति**। उदाहरणान्तरं परिहरति—**रेखागवयादिति**। गवयचित्रादित्यर्थः। स्फोटवादाश्रयेणोच्यमानमुदाहरणान्तरं तदाश्रयेणैव प्रथमतः परिहरति—**नचेति**। नादैः स्फोटयत इति व्युत्पत्त्या स्फोटः एकरूपः शब्दः। **नानेति**। कत्वखत्वादि विशेषविशिष्टतत्तन्नादकृतोऽभिव्यक्तिविशेषः सत्यः। तद्विशिष्टः सत्यशब्दोऽर्थज्ञानहेतुः। कत्वादेरारोपेपि तज्ज्ञानं सत्यमेव। तदेव चार्थज्ञानहेतुः इत्याशयः। सम्प्रति स्फोटवादं खण्डयति—**शब्दस्येति**। **बोधकस्यैवेति**। एवकारेण स्फोटव्यावृत्तिः।

शास्त्रजन्यज्ञानस्य न केनापि पश्चाद्बाधो दृश्यते इति पूर्वपक्ष्युक्तं (पृ. ८४ पं. १०)

ग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् । पश्चात्तनबाधादर्शनं चासिद्धम् । शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमिति चेत् । एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पाश्चात्यबाधादर्शनन्तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ।

यदुक्तम् ( पृ. २६ ) वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि । 'सदेव सोम्येदमग्र आसीत्' ( छां. ६।२।१ ) इत्येवमादीनीति । तदयुक्तम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं, जगन्निमित्तत्वं, सर्वज्ञता, सर्वशक्तियोगः, सत्यसंकल्पत्वं, सर्वान्तरत्वं, सर्वाधारता, सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकताञ्च प्रतिपाद्य, एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात् प्रकरणस्य । प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे । अत्राप्यारम्भणाधिकरणे ( २।१।११ ) निपुणतरमुपपादयिष्यामः । 'अथ परा यया तदक्षरमधिगम्यते' ( मुं. १।१।५ ) इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य, नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसर्वज्ञत्वादिकल्याणगुणगणयोगः पर-

---

खण्डयति–**पश्चात्तनेति** । **तस्यापि** । शास्त्रजन्यज्ञानस्यापि । **तत्** । शून्यमेवतत्वमिति । **एतदपि** । शास्त्रजन्यज्ञानमपि । **त्वयेति** । शास्त्रस्याविद्याजन्यभेदवासनामूलकत्वं वदतेत्यर्थः । **तस्यैव** । शून्यमेवतत्त्वमित्यस्यैव । सर्वशून्यवादिनो मते निषेध्याभावेन ततः परं निषेधानुदयादिति भावः ।

**ज्ञानैकरसेति** । विज्ञानघन इति श्रुतौ ज्ञानैकरसत्वेन प्रतिपादनान्निर्विशेषत्वम् । वस्तुमात्रशब्देन श्रुतेः सगुणे ब्रह्मणि तात्पर्याभावः सूच्यते । **सदेवेति** । पूर्वं 'येनाश्रुतम्' ( छां० ६।१।३ ) इति श्रुतौ कृतायाः एकविज्ञानेन सर्वविज्ञानं भवतीति प्रतिज्ञायाः समर्थिकेयं श्रुतिः । घटादिषु या सत्ता सा ब्रह्मसत्तैव ब्रह्म च सत्स्वरूपमेवेति तादृशब्रह्मसत्तयाऽर्थादेव घटादिज्ञानं भवतीति तात्पर्यम् । **एकविज्ञानेनेति** । ब्रह्मणा ज्ञातेन अज्ञातमपि घटादि ज्ञातं भवतीत्येव प्रतिज्ञार्थः । न तु ब्रह्मसत्तया सर्वं ज्ञातं भवतीति । मृदादिदृष्टान्तानुरोधात् । कारणसत्तया कार्यज्ञानायोगाच्च । न हि मृत्पिण्डसत्तया घटज्ञानं भवति । किं तु मृत्पिण्डज्ञानेनेति । तथा च नानया श्रुत्या सन्मात्रस्वरूपब्रह्मसिद्धिः । **अथ परेति** । अस्यामपि श्रुतौ 'अद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तद-

स्य ब्रह्मणः प्रतिपादितः। सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः। प्रवृत्तिनिमित्तभेदनैकार्थवृत्तित्वं सामानाधिकरण्यम्। तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः। इयांस्तु विशेषः। एकस्मिन् पक्षे पदानां मुख्यार्थता; अपरस्मिंश्च तेषां लक्षणा। न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव। एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्। तथा सति सामानाधिकरण्यासिद्धिश्च। एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात्। न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि। एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात् सामानाधिकरण्यस्य।

---

पाणिपादम्' (मुं. १।१।६) इत्यनेन प्रकृतिसम्बधिनो गुणा एव ब्रह्मणि निषिध्यन्ते। न सर्वथा निर्गुणत्वं प्रतिपाद्यते। अत एव तदुत्तरं 'नित्यंविभुम्' (मुं १।१।६) इत्यत्र नित्यत्वादयो गुणा उक्ता इति भावः। **अनेकविशेषणेति**। यथा नीलो घट इत्यत्र नीलत्वविशिष्टः घटत्वविशिष्टश्च य एकोऽर्थो घटरूपस्तस्यैवाभिधानं नीलशब्देन घटशब्देन च क्रियते तथा सत्यं ज्ञानमित्यत्रापि सत्यादिशब्दैः सत्यत्वादिगुणविशिष्टस्यैव ब्रह्मणः प्रतिपादनं न निर्गुणस्येति बोध्यम्। **प्रवृत्तीति**। नीलशब्दस्य नीलत्वं प्रवृत्तिनिमित्तम्। नीलत्वं निमित्तीकृत्यैव नीलशब्दस्य घटाद्यर्थे प्रवृत्तत्वात्। घटशब्दस्य च घटत्वं प्रवृत्तिनिमित्तम्। तादृशप्रवृत्तिनिमित्तभेदेन नीलघटपदयोर्यद्घटरूपैकार्थप्रतिपादकत्वं तदेव सामानाधिकरण्यमित्यर्थः। **मुख्यार्थैरिति**। स्वमतमेतत्। पूर्वपक्षिणा तु सत्यज्ञानादिपदानां तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वं प्रागुक्तम् (पृ. ३५ पं. १३) तदनुसारेऽप्याह—**तत्तद्गुणेति**। **अवश्याश्रयणीय इति**। सिद्धे च प्रवृत्तिनिमित्तभेदे ब्रह्मणः सगुणत्वमर्थादेव सिध्यतीत्याशयः। **न चेति**। सत्यज्ञानादिगुणविरोधिनो येऽसत्वाज्ञानादयस्तत्प्रत्यनीकता या ब्रह्मरूपवस्तुनि वर्तते सा न धर्मान्तरं किंतु वस्तुस्वरूपमेवेति न लक्षणापक्षे सगुणत्वं सिध्यतीति शङ्काशयः। **न चैकस्येति**। सिद्धान्तिमतेऽपि सत्यज्ञानादिपदानां भिन्नभिन्नार्थत्वाद्घटपटपदयोरिव सामानाधिकरण्यं न संभवतीति शङ्काशयः। परिहरति—**एकस्यैवेति**।

भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकास्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति शाब्दिकाः ।

यदुक्तम् ( पृ. ३७ पं.३ ) एकमेवाद्वितीयमित्यत्र अद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते । अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम् । कारणतयोपलक्षितस्य तस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते—सत्यं ज्ञानमनन्तं ब्रह्मेति । अतो हि लिलक्षयिषितं ब्रह्म निर्गुणमेव । अन्यथा, निर्गुणं निरञ्जनमित्यादिभिर्विरोधश्चेति । तदनुपपन्नम् । जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य । तथैव विचित्रशक्तियोगमेवावगमयति ' तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत '( छां. ६।२।३ ) इत्यादि । अविशेषेणाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत—इति चेत् । सिसृक्षोर्ब्रह्मण उपादानकारणत्वं ' सदेव सोम्येदमग्रआसीदेकमेव ' ( छां. ६।२।१ ) इति प्रतिपादितम् । कार्य्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिध्यत —इत्यवगम्यते । सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषिता नित्यत्वादयश्च निषिद्धाः स्युः । सर्वशाखाप्रत्ययन्यायश्चात्रभवतो विपरीतफलः । सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामतोपसंहारहेतुत्वात् । अतः कारणवाक्यस्वभावादपि ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै. २।१।१ ) इत्यनेन सविशेषमेव प्रतिपाद्यत—इति विज्ञायते । न च, निर्गुणवाक्यवि-

---

**सर्वशाखेति** । एतन्न्यायस्वरूपं प्राक् ( पृ. ३६ पं. २४ ) उक्तम् । **स्वव्यतिरिक्तेति** । ब्रह्मापेक्षयाऽन्यज्जगत्कारणं नास्ति किंत्वेकमेव ब्रह्म जगदुत्पादनसमर्थमित्येवाद्वितीयपदस्य तात्पर्यम् । **विचित्रशक्तियोगमेवेति** । न तु निर्गुणत्वमित्यर्थः । शङ्कते— **अविशेषेणेति** । **विपरीतफल इति** । सर्वशाखा प्रत्ययन्यायेन हि न श्रुत्युक्तानां गुणानां त्यागो भवति किं त्वनुक्तानां संग्रह एवेति भावः । **न चेति** । निर्गुणब्रह्मवादिनो मते सगुणवाक्यापेक्षया निर्गुणवाक्यस्यापच्छेदन्यायेन बलीयस्त्वान्न निर्गुण-

---

१ अपच्छेदन्यायस्वरूपं प्रागुक्तम् ( पृ. ३४ पं. १४ ).

रोधः। प्राकृतहेयगुणविषयत्वात्तेषां 'निर्गुणं निरञ्जनं निष्कलं निष्क्रियं शान्तम् '( श्वे. ६।१९ ) इत्यादीनाम्। ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति। न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम्। ज्ञातुरेव ज्ञानस्वरूपत्वात्। ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिप्रदीपादिवदित्युक्तमेव। ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति। 'यः सर्वज्ञः सर्ववित् '( मुं. १।१।९ ) 'तदैक्षत '( छां. ६।२।३ ) 'सेयं देवतैक्षत' ( छां. ६।३।२ )'स ऐक्षत लोकान्नु सृजै ( ऐ. १।१ ) इति।

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ' ( श्वे. ६।१३ ) 'ज्ञाज्ञौ द्वावजावीशानीशौ ' ( श्वे. १।९ )

'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम्।
पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम्॥
न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च '

(श्वे.६।७।८)'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.८।१।५) इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति, समस्तहेयगुणरहितताञ्च। निर्गुणवाक्यानां सगुणवाक्यानाञ्च विषयमपहतपाप्मे-

---

सगुणवाक्यविरोधः। सगुणब्रह्मवादे तु तथा वक्तुमशक्यत्वात्स्यादेव विरोध इति शङ्काशयः। परिहरति—**प्राकृतेति**। एवं च विषयभेदान्न विरोध इति भावः। **ज्ञानमात्रस्वरूपवादिन्यः**। विज्ञानघन इत्याद्याः। **ज्ञातृत्वमेवेति**। एवकारेण ज्ञातृत्वस्यानन्यथासिद्धिरभिप्रेता। **लोकान्नु सृजा इति**। इति श्रुतयो वदन्तीति संबन्धः। **नित्य इति**। अत्र मंत्रे कामप्रदत्वबहुत्वगुणावप्यात्मनि सूचितौ। **चेतनः**। ज्ञाता। **ज्ञाज्ञाविति**। अत्र ज्ञातृत्वमीश्वरत्वं च सूचितम्। **तमीश्वराणामिति**। अत्रेश्वरत्वदेवतात्वपतित्वानि सूचितानि। ईश्वरत्वं च नियन्तृत्वम्। तेन ज्ञातृत्वं सिध्यति। ज्ञातृत्वमन्तरेण नियन्तृत्वायोगात्। देवतात्वं कर्माराध्यत्वम्। **कार्यं** शरीरम्। **करण**मिन्द्रियादि। **न तत्सम इति**। अस्मिन्विशेषनिषेधे एव अद्वितीयमितिसामान्यनिषेधस्य पर्यवसानं बोध्यम्। अत्र च ज्ञानशक्त्यादीनां स्वाभाविकत्वं स्पष्टमेवोक्तम्। **स्वाभाविकानिति**। अनेन गुणानामविद्याकल्पितत्वनिरासः। **विषयमिति**। अस्य विधि-

दैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' ( छां. ६।२।२-३ ) इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन । तदपि, सदेवेदमग्र एकमेवासीदित्युपादानतां प्रतिपाद्य, अद्वितीयमित्यधिष्ठात्रन्तरं प्रतिषिध्य, तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेत्येकस्यैव प्रतिपादनात् । तस्माद्यन्मूला जगज्जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति । जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्वेन प्रतिपन्नं ब्रह्म । इति च जन्मादीनां तथाप्रतिपन्नस्य लक्षकत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः ।

जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः । लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति । अज्ञातस्वरूपे वस्तुन्येकस्मिंल्लिलक्षयिषितेऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति । विशेषणानामेकाश्रयतया प्रतीतेरेकस्मिन्नेवोपसंहारात् । षण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति । अत्र तु कालभेदेन जन्मादीनां न विरोधः ।

' यतो वा इमानि भूतानि ' ( तै. ३।१।१ ) इत्यादिवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्त स्वरूपमभिधीयते–

---

यत्प्रयन्तीत्यत्र यदिति निर्देशः । **तदपीति** । निमित्तोपादानत्वरूपकारणत्वमपीत्यर्थः । **प्रतिपन्नं ब्रह्मेति** । तथा च सामान्यतो बृहत्वं पूर्वप्रतिपन्नाकारः । गुणतो विभूतितश्चानवधिकं यद् बृहत्वं तद्रूपो बृहत्वविशेषस्तूपलक्ष्याकार इति बोध्यम् । **इति चेति** । अतश्चेत्यर्थः ।

अथ विशेषणतया लक्षणत्वमुपपादयति–**जगादीति** । **लक्षणभूतान्यपि** । व्यावर्तकस्वरूपाण्यपि । **स्वविरोधिव्यावृत्तमिति** । न तु स्वेतरयावद्धर्मव्यावृत्तमित्यर्थः। यथा नीलं वस्त्रमित्युक्ते नीलपदेन स्वविरोधिशुक्लत्वादेरेव व्यावृत्तिः । न तु स्वाविरोधिमार्दवादेरिति भावः ।

अथ सत्यज्ञानादीनां लक्षणत्वमुपपादयति–**यतो वेति** । यतो वेति लक्षणवाक्येन

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २।१।१) इति। तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह। तेन, विकारास्पदमचेतनं, तत्संसृष्टचेतनश्च व्यावृत्तः। नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह। तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूपमाह। सगुणत्वात् स्वरूपस्य, स्वरूपेण गुणैश्चानन्त्यम्। तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः। विशेषणानां व्यावर्तकत्वात्। ततः, सत्यं ज्ञानमनन्तं ब्रह्मेत्यनेन वाक्येन जगज्जन्मादिनावगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रयणम्। अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसंकल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम्।

---

कारणत्वमेव लक्षणत्वेनोच्यते इत्यस्य कारणवाक्यत्वम्। **निरुपाधिकसत्ता**। निर्विकारत्वम्। विकारात्मना परिणामविशेषेण तत्तदवस्थस्य या सत्ता तस्याः सोपाधिकसत्तात्वात्। **ब्रह्माहेति**। निरुपपदस्य सत्यशब्दस्य शक्तिसङ्कोचे प्रमाणाभावेन स्वरूपतो धर्मतश्चैकरूपत्वमेव सत्यत्वमित्यर्थः। स्वरूपत इत्यनेनाचेतनव्यावृत्तिः। धर्मत इत्यनेन जीवव्यावृत्तिः। **नामान्तरभजनार्हम्**। नामान्तरप्राप्त्यर्हम्। **देशकालेति**। इह ब्रह्म नान्यत्रेत्याकारकपरिच्छेदशून्यत्वं देशपरिच्छेदराहित्यम्। न तु देशाभावः। तथेदानीं ब्रह्म नान्यदेत्याकारकपरिच्छेदशून्यत्वं कालपरिच्छेदराहित्यम्। न तु कालाभावः। तथेदं वस्तु ब्रह्म न भवतीत्याकारकपरिच्छेदशून्यत्वं वस्तुपरिच्छेदराहित्यम्। न तु वस्तुनोऽभावः। ब्रह्मव्यतिरिक्तयोश्चिदचितोः सत्वेऽपि तयोर्ब्रह्मशरीरत्वेन ब्रह्मसामानाधिकरण्येन प्रतीयमानत्वात् 'इदं वस्तु ब्रह्म न भवति' इत्याकारकवस्तुपरिच्छेदो न जायते। **पूर्वपदद्वयम्**। सत्यं ज्ञानमितिपदद्वयम्। **सातिशयेति**। नित्यानां जीवानां स्वरूपमणुत्वात्परमात्मस्वरूपापेक्षया सातिशयम्। तथा नित्यानां जीवानां ज्ञानव्यतिरिक्ता ये ऐश्वर्यादयो गुणास्तेषां जगद्व्यापारानर्हत्वात्परमात्मगुणापेक्षया सातिशयत्वम्।

ये तु, निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति । तन्मते, ' ब्रह्मजिज्ञासा, ' ' जन्माद्यस्य यतः ' इत्यसङ्गतं स्यात् । निरतिशयबृहद्बृंहणश्च ब्रह्मेति निर्वचनात् । तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च । एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृताः श्रुतयश्च न तत्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वात् न निर्विशेषवस्तुनि प्रमाणम् । जगज्जन्मादिभ्रमाः यतस्तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः । भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि प्रकाशैकरसतयोच्यते । प्रकाशत्वं तु जडाद्व्यावर्तकं स्वस्य परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे प्रकाशतैव न स्यात् । तुच्छतैव स्यात् ॥ २ ॥

---

**ये तु** । मायावादिनस्तु । **इति निर्वचनादिति** । न तु निर्विशेषं ब्रह्मेति निर्वचनं कृतमित्याशयः । **इति वचनाच्चेति** । न तु ' जगतोऽध्यासो यतः ' इति सूत्रितमित्याशयः । **ईक्षणेति** । ' ईक्षतेर्नाशब्दम् ' (ब्र. सू. १।१।५) इत्यत्र ब्रह्मणीक्षणसम्बन्धी दर्शितः । ब्रह्मणो निर्विशेषत्वे तु स न संभवतीत्यर्थः । **तर्कश्च** । अनुमानं च । **साध्येति** । साध्यभूतो यो धर्मस्तदव्यभिचारी तदनधिकरणावृत्तिर्यः साधनभूतो धर्मस्तेन युक्तमेव वस्त्वनुमानस्य विषयो न तु निर्विशेषमिति भावः । **स्वोत्प्रेक्षापक्षेऽपि** । जन्मादिसूत्रस्य स्वोत्प्रेक्षितार्थाङ्गीकारेऽपि । किं चायं मायावाद्यभिमतो विवर्तवादो न श्रुत्यारूढः । यतो यथा सौम्येति श्रुतौ परिणामिघटादिदृष्टान्त एवोक्तो न तु रज्जुसर्पादिः । तथाग्रे सूत्रकृताऽपि 'आत्मकृतेः परिणामात्' (ब्र. सू. १।४।२६) इत्युक्तं न तु विवर्तादित्यवधेयम् ॥ २ ॥

---

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तदयुक्तम् । तद्धि न वाक्यप्रतिपाद्यम् । अनुमानेन सिद्धेरित्याशङ्क्याह—

## शास्त्रयोनित्वात् ॥ ३ ॥

'**शास्त्रं**' यस्य '**योनिः**' कारणं प्रमाणं तच्छास्त्रयोनि । तस्य भावः '**शास्त्रयोनित्वम्**' तस्मात् । ब्रह्मज्ञानकारणत्वात् शास्त्रस्य तद्योनित्वम् । ब्रह्मणोऽत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणत्वात् । उक्तस्वरूपं ब्रह्म, 'यतो वा इमानि भूतानि जायन्ते' ( तै. ३।१।१ ) इत्यादि वाक्यं बोधयत्येवेत्यर्थः ।

ननु, 'शास्त्रयोनित्वं' ब्रह्मणो न सम्भवति, प्रमाणान्तरवेद्यत्वात् ब्रह्मणः । अप्राप्ते तु शास्त्रमर्थवत् ।

किं तर्हि तत्र प्रमाणम् । न तावत् प्रत्यक्षम् । तद्धि द्विविधम् । इन्द्रियसम्भवं योगसम्भवञ्चेति । इन्द्रियसम्भवञ्च, बाह्यसम्भवमान्तरसम्भवञ्चेति द्विधा । बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजनकानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपरमपुरुषविशेषविषयबोधजनकानि ।

---

**सिद्धेरिति** । अप्राप्ते हि शास्त्रमर्थवदिति न्यायेन प्रत्यक्षादिप्रमाणान्तराविषयवस्तुप्रतिपादकत्वे एव शास्त्रस्य प्रमाणत्वात्प्रमाणभूतवाक्यप्रतिपाद्यत्वं ब्रह्मणो न सम्भवतीत्याशयः ।

**शास्त्रं यस्येति** । यथा अब्भक्ष इत्यत्राप एव भक्षयतीत्यर्थो गम्यते तथाऽत्र शास्त्रमेव यस्य योनिरित्यर्थो बोध्यः । **कारणम्** । ज्ञप्तिकारणम् । न तूत्पत्तिकारणम् ।

अस्मिन्नधिकरणे मुख्यपूर्वपक्षमुत्थापयति—**नन्विति** ।

सिद्धान्त्येकदेशी मीमांसकः शङ्कते—**किं तर्हीति** । **विद्यमानेति** । विद्यमानो यः सन्निकर्षः देशतः कालतश्च ( विषयेन्द्रिययोः ) सम्बन्धस्तद्योग्यो यः स्वविषयस्तद्बोधजनकानीत्यर्थः । योग्यपदेन धर्माधर्मादिव्यावृत्तिः । **सर्वार्थेति** । सर्वार्थसाक्षा-

नाप्यान्तरम् । सुखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः । नापि योगजन्यम् । भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता। तदतिरिक्तविषयत्वे कारणाभावात् । तथा सति तस्य भ्रमरूपता । नाप्यनुमानं विशेषतो दृष्टं, सामान्यतो दृष्टं वा । अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्न विशेषतो दृष्टम् । समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते ।

ननु च, जगतः कार्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञक-

---

त्कारः सर्वपदार्थप्रत्यक्षज्ञानं तन्निर्माणं सर्वपदार्थोत्पत्तिस्तदुभयसमर्थो यः परमपुरुषरूपो विशेषविषयस्तद्बोधजनकानि न भवन्तीत्यर्थः । **नाप्यान्तरमिति** । मनोऽपि न परमपुरुषबोधजनकमित्यर्थः । **सुखादीति** । आन्तरसुखदुःखादीति पाठे आन्तरमित्यस्य विवरणं सुखदुःखादीति बोध्यम् । **नापि योगेति**। योगिप्रत्यक्षं किं पूर्वानुभूतापेक्षया अधिकविषयमस्ति न वा । अन्त्ये आह–**भावनेति** । भावनाप्रकर्षपर्यन्तं जन्म यस्येत्यर्थः । अनुभूतानतिरिक्तविषयस्येति यावत् । तथा च यावदेव भावना तावदेव योगिप्रत्यक्षमुत्पद्यते । भावना चानुभूतसंबन्धिन्येवेति। अनधिकविषयस्य योगिप्रत्यक्षस्य भावनाजन्यत्वेन स्मृतिरूपत्वान्न प्रमाणत्वमिति प्रमाणविशेषप्रत्यक्षत्वं दूरोत्सारितं स्यात् । आद्ये आह–**तदतिरिक्तेति** । इन्द्रियसम्बन्धरूपकारणाभावान्नाधिकविषयस्य योगिप्रत्यक्षस्य प्रामाण्यम् । **तथा सतीति** । कारणाभावेप्यतिरिक्तविषयत्वाङ्गीकारे सति तस्य दोषमूलकत्वेन भ्रान्तितैवेत्यर्थः । **विशेषतो दृष्टम्** । कार्यकारणभावरूपविशेषसम्बन्धमूलकम् । यथा कार्येण धूमेन कारणस्य वन्हेरनुमानम् । यथा च कारणेन मेघागमनेन कार्यस्य वृष्ट्यादेरनुमानम् । **सामान्यतो दृष्टम्** । कार्यकारणभावसम्बन्धराहित्येऽपि सामान्यतः सहचारदर्शनजन्यम् । यथा गन्धेन पृथिवीत्वानुमानम् । **सम्बन्धावधारणविरहात्** । कार्यकारणभावसम्बन्धज्ञानाभावात् । **नियतम्** । व्याप्तम् ।

अथ पूर्वपक्ष्येकदेशी परमात्मन्यनुमानं दर्शयति–**ननु चेति । तदुपादानेति**। उपादानं समवायिकारणम् । उपकरणं निमित्तकारणम् । संप्रदानं क्रियोद्देश्यं भोक्ता । प्रयोजनं विनियोगः एतदभिज्ञः कर्ता यस्य तत्त्वमित्यर्थः। यत्रयत्र कार्यत्वं तत्रतत्रै-

---

१ ख. आन्तरसुखदुःखादि.

तृकत्वव्याप्तम् । अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम् । सर्वं हि घटादिकार्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम् । अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनञ्च । सावयवत्वेन जगतः कार्यत्वम् ।

उच्यते । किमिदमेकचेतनाधीनत्वम् । न तावत्तदायत्तोत्पत्तिस्थितित्वम् । दृष्टान्तो हि साध्यविकलः स्यात् । न ह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति । तच्छरीरस्य भोक्तृणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात् तदुत्पत्तिस्थित्योः । किञ्च, शरीरावयविनः स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते । प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न सम्भवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे । तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत् । अनेकचेतनसाध्येषु गुरुतररथशिलामहीधरादिषु व्यभिचारः । चेतनमात्राधीनत्वे सिध्यसाध्यता ।

---

तादृशकर्तृकत्वमितिव्याप्त्या कर्ता सिध्यति । स चार्थात्परमात्मैवेत्याशयः । एककर्तृकत्वसिध्यर्थमनुमानान्तरमाह—**अचेतनेति** । उक्तानुमानद्वये क्रमेण दृष्टांतमाह—**सर्वं हीत्यादिना** । **एकचेतनाधीनं चेति** । दृष्टमित्यनुषज्यते । उक्तानुमानस्य कार्यत्वसिध्यधीनत्वात्कार्यत्वं जगतः साधयति—**सावयवत्वेनेति** ।

सिद्धान्त्येकदेशी दूषयति—**उच्यत इति** । आदौ द्वितीयमनुमानं सन्निहितत्वाद्दूषयति—**किमिदमिति । न तावदिति** । तदायत्तोत्पत्तिस्थितित्वं हि तदिच्छाधीनोत्पत्तिस्थितित्वम् । तच्च दृष्टान्ते शरीरे न संभवति । शरीरस्योत्पत्तेः स्थितेर्वा जीवेच्छाधीनत्वाभावात् । ननु तददृष्टाधीनोत्पत्तिस्थितित्वमेव तदायत्तोत्पत्तिस्थितित्वमिति चेत्तत्राप्याह—**दृष्टान्तो हीति । अवयवसंश्लेषविशेषः** । अवयवानां सम्यक् सम्बन्धः । स एवावयविनः स्थितौ प्रयोजको न तु जीव इत्यर्थः । **पक्षेति** । सर्वं जगत्पक्षः । शरीरं सपक्षः । **तदायत्तेति** । एकचेतनाधीनप्रवृत्तिकत्वमेवैकचेतनाधीनत्वम् । अस्ति चेदं सपक्षे शरीरे । शरीरप्रवृत्तेर्जीवाधीनत्वात् । साध्यकोटौ एकत्वस्याविवक्षायां दोषमाह—**चेतनमात्रेति** ।

किञ्च उभयवादिसिद्धानां जीवानामेव लाघवन्यायेन कर्तृत्वाभ्युपगमो युक्तः । नच जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासम्भवः । सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षातकारसामर्थ्यात् । यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते । उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः । तत्साक्षात्कारानपेक्षणात् कार्यारम्भस्य । शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते न साक्षात्कारः । नहि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत् तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारम्भन्ते । इह तु चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः ।

किञ्च, यच्छक्यक्रियं शक्योपादानादिविज्ञानञ्च, तदेव तदभिज्ञकर्तृकं दृष्टम् । महीधरमहार्णवादि त्वशक्यक्रियमशक्योपादानादिज्ञानं चेति न चेतनकर्तृकम् । अतो घटमणिकादिसजातीय-शक्यक्रिय-शक्योपादानादिविज्ञान-वस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति ।

---

आद्यमनुमानं दूषयति—**किं चेति** । **यथेदानीमिति** । एवमेव पूर्वकालेपीति भावः । ननु तथापि धर्माधर्मयोः साक्षात्कारासंभवाज्जीवस्य कर्तृत्वं न संभवतीति चेत्तत्राह—**उपकरणेति** । उपकरणीभूतयागादिजन्या स्वात्मातिशयरूपा या शक्तिस्तद्रूपमपूर्वादिपदवाच्यं यददृष्टं तस्य साक्षात्काराभावेपीत्यर्थः । **शक्तिमत्** । शक्तिविशिष्टं दण्डादि, शक्तिजनकं यागादि च । तस्य साक्षात्कारः शक्तिमत्वेनैव रूपेणेति नाग्रहः । **मणिकः** । कमण्डलुः ।

अथ सावयवत्वहेतोः सोपाधिकत्वं दर्शयति—**किं चेति** । शक्या क्रिया यस्य कार्यस्य तच्छक्यक्रियम् । शक्यमुपादानादिविज्ञानं यस्य कार्यस्य तच्छक्योपादानादिविज्ञानम् । शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चेत्युपाधिद्वयम् । यत्र कार्यत्वं तत्र शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चेति घटादौ साध्यव्यापकत्वम् । यत्र सावयवत्वं तत्र शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं च नियमेन नास्ति । महीधरादौ व्यभिचारादिति साधनाव्यापकत्वम् ।

किञ्च, घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवता-नाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन्नयं कार्यत्वहेतुः सिसाधयिषितपुरुषसार्वज्ञसर्वैश्वर्यादिविपरीतसाधनात् विरुद्धः स्यात्। न चैतावता सर्वानुमानोच्छेदप्रसङ्गः। लिङ्गिनि प्रमाणान्तर-गोचरे लिङ्गबलोपस्थापिता विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो हि निवर्तन्ते। इह तु, सकलेतरप्रमाणाविषये लिङ्गिनि निखिलजगन्नि-र्माणचतुरे अन्वयव्यतिरेकावगताविनाभावनियमा धर्माः सर्व एवाविशेषे-ण प्रसज्यन्ते। निवर्तकप्रमाणाभावात् तथैवावतिष्ठन्ते। अत आगमादृते कथमीश्वरः सेत्स्यति।

अत्राहुः। सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते। भवन्ति च प्रयोगाः। विवादाध्यासितं भूभूधरादि, कार्यं सावयवत्वात् घटादिवत्। तथा विवादाध्यासितमवनिजलधिमहीधरादि, कार्यं महत्त्वे सति क्रियावत्त्वात् घटादिवत्। तनुभुवनादि, कार्यं महत्त्वे सति मूर्तत्वात् घटादिवदिति। सावयवेषु द्रव्येष्विदमेव क्रियते, नेतरदिति कार्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे। कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चोपलभ्यत इति चेत्, न। कार्यत्वे-

---

अथ कार्यत्वहेतुः परमात्मनि विरुद्धधर्मसाधक इत्याह—**किं चेति। अनीश्वरेण।** कर्मवश्येन। **परिग्रहवता।** दण्डचक्रादिसाधनसहितेन। **चेतनं कर्तारम्।** परमात्मानम्। **उच्छेदप्रसङ्ग इति।** पर्वतो वह्निमानित्यत्रापि वह्नौ सपक्षमहानसदृष्टान्तेन गृहावयवसम्बन्धित्वचुल्लीस्थत्वपाकसाधनत्वादिधर्मप्रसङ्गादित्याशयः **लिङ्गिनि।** साध्ये। **अन्वयेति।** अन्वयव्यतिरेकाभ्यामवगतोऽविनाभावनियमो व्याप्तिनियमो येषां तथाभूता इत्यर्थः। सिद्धान्त्येकदेशिमतमुपसंहरति—**अत इति।**

अथ मुख्यपूर्वपक्षमुपपादयति—**अत्राहुरिति।** आदौ कार्यत्वहेतुं स्वरूपासिद्धिनि-रसनेन द्रढयति—**सावयवत्वादेवेति। महत्वे सतीति।** अनेन परमाणुव्यावृत्तिः। **क्रियावत्त्वादिति।** अनेनाकाशव्यावृत्तिः। **तनुः।** शरीरम्। यद्यप्यस्मदादिशरीरे कार्यत्वं सिद्धमेव तथापीश्वरशरीरे कार्यत्वज्ञापनार्थं तनूपन्यासः। **मूर्तत्वात्।** क्रियावत्त्वात्। अनेनाकाशव्यावृत्तिः। उपाधिं शङ्कते—**कार्यत्वेति। कार्यत्वेनेति।** अयं भावः। त्वदभिमतकार्ये घटादावपि शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं च

नानुमितेऽपि विषये, ज्ञानशक्ती कार्यानुमेये इति अन्यत्रापि सावय-वत्वादिना कार्यत्वं ज्ञातमिति, ते च प्रतिपन्ने एवेति न कश्चिद्विशेषः। तथा हि। घटमणिकादिषु कृतेषु कार्यत्वदर्शनानुमितकर्तृगततन्निर्माणश-क्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्यावयवस-न्निवेशविशेषेण तस्य कार्यत्वं निश्चित्य, तदानीमेव कर्तुस्तज्ज्ञानवैचित्र्य-मनुमिनोति। अतस्तनुभुवनादेः कार्यत्वे सिद्धे, सर्वसाक्षात्कारतन्निर्माणा-दिनिपुणः कश्चित् पुरुषविशेषः सिध्यत्येव।

किञ्च, सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानाधि-ष्ठितयोस्तयोरचेतनयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदान-चतुरः कश्चिदास्थेयः। वर्धकिनानधिष्ठितस्य वास्यादेरचेतनस्य देशका-लाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात्। बीजा-ङ्कुरादेः, पक्षान्तर्भावेण तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञता-विजृम्भितम्। तत एव सुखादिभिर्व्यभिचारदर्शनवचनमपि तथैव। नच, लाघवेनोभयवादिसम्प्रतिपन्नक्षेत्रज्ञानामेवेदृशमधिष्ठातृत्वकल्पनं युक्तम्। तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात्। दर्शनानुगुणैव हि स-

---

न प्रत्यक्षेणोपलभ्यते। तयोः पुरुषतंत्रत्वात्। किंतूत्पन्नं घटादिरूपं कार्यं दृष्ट्वा कार्य-त्वहेतुकानुमानेनैव तद्धर्मद्वयमनुमीयते इति त्वयाप्यास्थेयम्। तच्चानुमानं महीधरा-दावपि तुल्यमिति। **ज्ञानशक्ती**। ज्ञानं कर्तुरतत्कार्योपादानादिविज्ञानम्। शक्तिश्च कर्तुस्तत्कार्यकरणसामर्थ्यम्। **अन्यत्रापि**। महीधरादावपि। **ते**। ज्ञानशक्ती। **प्रति-पन्ने**। ज्ञाते।

परमात्मन्यनुमानान्तरं दर्शयति—**किं चेति**। **तयोः**। धर्माधर्मयोः। **वर्धकिना**। त-क्ष्णा। **वास्यादेरिति**। वासिस्तक्षणसाधनं 'वाकस' इति प्रसिद्धम्। **अनेकपरिकरस-न्निधानेऽपि**। अनेक साधनसन्निधानेऽपि। **यूपः**। यज्ञस्तम्भः। ननु कथं चेतनानाधिष्ठित-मपिबीजमङ्कुरमुत्पादयतीति चेत्तत्राह—**बीजाङ्कुरादेरिति**। तत्राप्युक्तदृष्टान्तेन चेत-नाधिष्ठितत्वमनुमेयमेवेति भावः। **श्रोत्रियवेतालानामिति**। परिहासोक्तिः। **तथैवेति**। सुखादिकमपि चेतनाधिष्ठितमेव पुलकाद्युत्पादयतीत्यर्थः। **क्षेत्रज्ञानामेवेति**। जीवा एव धर्माधर्माद्यधिष्ठाय सुखाद्युपभोगं जनयन्तीत्याशयः। **सूक्ष्मेति**। सूक्ष्मं परमा-

र्वत्र शक्तिकल्पना । न च, क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोऽस्ति । अतः प्रमाणान्तरतो न ततसिद्ध्यनुपपत्तिः । समर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुना सिध्यन्, स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसम्पन्न एव सिध्यति ।

यत्तु, अनैश्वर्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतं तदनुमानवृत्तानभिज्ञत्वनिबन्धनम्। सपक्षे सहदृष्टानां सर्वेषां कार्यस्याहेतुभूतानाञ्च धर्माणां लिङ्गिन्यप्राप्तेः ।एतदुक्तं भवति । केनचित् किञ्चित् क्रियमाणं स्वोतपत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानञ्चापेक्षते । नत्वन्यासामर्थ्यमन्याज्ञानञ्च । हेतुत्वाभावात् । स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां सम्बन्धितया दर्शनमात्रेणाकिञ्चित्कर-

ण्वादि जीवेन न दृश्यते । स्थूलमपि भित्याद्यन्तारितं वस्तु न दृश्यते । स्थूलमनन्तरितमपि दूरं पर्वतादिस्थं वस्तु न दृश्यते । तथा च जीवस्यात्यल्पशक्तित्वेन धर्माधर्मदर्शनायोगात्तद्द्रष्टृत्वेन परमात्मैवास्थेय इति भावः । **अत इति** । अनुमानादिप्रमाणान्तरेण परमात्मा सिध्यत्येवेत्यर्थः । **समर्थेति** । यत्र यत्र कार्यत्वं तत्र तत्र समर्थकर्तृपूर्वकत्वमस्त्येवेति व्याप्तिः । तथा च कार्यत्वेन हेतुना सिध्यन् परमात्मरूपः कर्ता सर्वकार्यकरणसमर्थ एव सिध्यतीति न जीववत्परमात्मनो ज्ञानशक्ती सङ्कुचिते इति भावः ।

अथ कार्यत्वहेतोर्विरुद्धधर्मसाधकत्वं प्रागुक्तं (पृ. १९६ पं. १) निरस्यति—**यत्त्विति । लिङ्गिनि** । साध्ये । महानसे सपक्षे दृष्टानामपि गृहावयवसम्बन्धित्वादिधर्माणां पर्वतो वन्हिमानित्यत्र वन्हावप्राप्तेः । नच वन्हेः प्रमाणान्तरप्रतिपन्नत्वान्न तद्धर्मप्राप्तिरिति सिद्धान्त्येकदेश्युक्तं युक्तमिति वाच्यम् । धर्माप्राप्तौ प्रमाणान्तरप्रतिपन्नत्वस्याप्रयोजकत्वात् । किंतु धूमरूपकार्यस्य वन्हिरेव हेतुर्न तु तत्र गृहावयवसम्बन्धित्वादिधर्माः । अतो धूमः स्वहेतुभूतं वन्हिमेवानुमापयति नान्यधर्मान्तरम् । एवमत्रापि कार्यं स्वहेतुभूतं परमात्मानं तत्र स्वनिर्माणसामर्थ्यं स्वकारणज्ञानं चानुमापयति । कार्यनिर्माणसामर्थ्यं कार्यकारणज्ञानं चान्तरेण कार्योत्पत्त्यदर्शनात् । न तु कार्यं स्वाहेतुभूताननीश्वरत्वार्थान्तराज्ञानादिधर्मान्परमात्मन्यनुमापयति । अनीश्वरत्वस्यार्थान्तराज्ञानस्यान्येषां चैवंविधानां धर्माणामन्वयव्यतिरेकाभ्यां कार्यनिरूपितकारणत्वाभावात् । न हि घटः कुलाले इतरकार्यकरणासामर्थ्यमपेक्षते । न वा स्वव्यतिरि-

स्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनायोगादिति। किञ्च, क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि उत कतिपयविषयम्। न तावत् सर्वविषयम्। नहि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न विजानाति। नापि कतिपयविषयम्। सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात्। अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तेरिति न विपरीतसाधनत्वम्।

कुलालादीनां दण्डचक्राद्यधिष्ठानत्वं शरीरद्वारेण दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेत्, न। संकल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्येश्वरस्य परप्रवर्तनरूपः संकल्प इति चेत्। न शरीरापेक्षः संकल्पः। शरीरस्य संकल्पहेतुत्वाभावात्। मन एव हि संकल्पहेतुः। तदभ्युपगतमीश्वरेऽपि। कार्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात्। मानसः संकल्पः सशरीरस्यैव। शरीरस्यैव समनस्कत्वादिति चेत्। मनसो नित्यत्वेन देहापगमेऽपि मनसः सद्भावेनानैकान्तिकत्वात्। अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानश-

---

कपटादिपदार्थाज्ञानं तत्रापेक्षते। अथापेक्षते इति वैयात्येन ब्रूषे चेत्तत्राह–**किं चेति**। **नापि कतिपयेति**। घटव्यतिरिक्तं कतिपयं वस्तु पटो वा भित्तिर्वा गौर्वा कुसूलं वा यद् गृह्यते तदज्ञानमेव तत्करणासामर्थ्यमेव च घटकर्तुः कुलालस्य वर्तते इति नियमे मानाभावात्, तज्ज्ञानवतोऽपि तत्करणसमर्थस्यापि च कुलालस्य घटहेतुत्वदर्शनाद्व्यभिचार इति भावः।

शङ्कते–**कुलालादीनामिति**। **भूतेति**। भूतवेतालानामपगमः गरलस्य विषस्य विनाश इत्यन्वयः। पुनः शङ्कते–**कथमिति**। **कार्यत्वेनेति**। यथा कार्यत्वेन हेतुना उपादानज्ञानं कार्यकरणसामर्थ्यं चेश्वरस्यास्तीत्युक्तं तथा तेनैव हेतुनेश्वरस्य मनोऽप्यस्ति। अङ्गीकृतश्च नैयायिकैकदेशिभिः परमात्मन्यपि मनःसम्बन्ध इति बोध्यम्। पुनः शङ्कते–**मानस इति**। **अनैकान्तिकत्वात्**। यत्र मनस्तत्र सशरीरत्वमस्त्येवेति नियमस्य व्यभिचरितत्वात्। **क्षेत्रज्ञो न प्रभवति**। जीवः समर्थो न भवति।

त्यैश्वर्योऽशरीरः संकल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेन सिध्यति। अतः प्रमाणान्तरावसेयत्वात् ब्रह्मणो, नैतद्वाक्यं ब्रह्म प्रतिपादयति।

किञ्च, अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेनाकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानञ्च प्रतिपादयितुं शक्नोतीति।

एवं प्राप्ते ब्रूमः। यथोक्तलक्षणं ब्रह्म जगज्जन्मादिवाक्यं बोधयत्येव। कुतः, शास्त्रैकप्रमाणकत्वात् ब्रह्मणः। यदुक्तं, सावयवत्वादिना कार्यं सर्वं जगत्, कार्यञ्च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति। तदयुक्तम्। महीमहार्णवादीनां कार्यत्वेऽपि एकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात्। न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वं येनैकदैवैकः कर्ता स्यात्। पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमाभावात्। न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या कार्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनानुपपत्तेश्चैक एव कर्ता भवितुमर्हति। क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन, तेषामेवातिशयितादृष्टसम्भावनया

---

ननूक्तरीत्या परमात्मनोऽनुमानगम्यत्वेऽपि अनुमानागम्यकतिपयार्थबोधकत्वेन ब्रह्मप्रतिपादकस्य शास्त्रस्य प्रामाण्यमस्त्येव। ब्रह्मैकमेव जगतो निमित्तकारणमुपादानकारणं चेत्यनुमानेन न ज्ञायते। लोके तयोरैक्यस्यादर्शनात्। तथाकाशाद्युत्पादकं ब्रह्मेति शास्त्रेण न ज्ञायते। लोके निरवयवपदार्थस्योत्पत्तेरदर्शनादिति चेत्तत्राह— **किं चेति। नैकमेवेति।** एकमेव ब्रह्म आकाशादेः कृत्स्नस्य जगतो निमित्तकारणमुपादानकारणं च तदेवेत्याकारकं लोकविरुद्धमर्थं प्रतिपादयितुं शास्त्रमपि न शक्नोतीत्यर्थः।

अथ मुख्यसिद्धान्तं दर्शयति-**एवमिति। प्रमाणाभावादिति।** यद्यपि कार्यत्वहेतुकानुमानेन जगतः कर्ता सिध्यति तथापि स एक एव एकदैव च तेनेदं सर्वं निर्मितमिति न सिध्यति। एवं च जगतोऽनेकजीवकर्तृकत्वे स्वीकृतेप्यनुमानं न विरुद्धमिति नानुमानेनेश्वरसिद्धिरितिभावः। **विचित्रेति।** मह्यादिजगतोऽस्मदादिजीवैः कर्तुमशक्यत्वेन अतिविपुलत्वेनातिसूक्ष्मत्वेन च विचित्रत्वं बोध्यम्। **तदतिरिक्तेति।** जीवातिरिक्तैकेश्वरकल्पनायामनेककल्पनारूपदोषाभावादित्यर्थः। **अर्हतीति।** इति न वाच्यमित्यर्थः। तत्र हेतुमाह—**क्षेत्रज्ञानामिति। शक्तिवैचित्र्येति।** योगिनां हि

च तत्तद्विलक्षणकार्यहेतुत्वसम्भवात् । तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेश्च । न च युगपत्सर्वोच्छित्तिः सर्वोत्पत्तिश्च प्रमाणपदवीमधिरोहतः । अदर्शनात् । क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायामपि विरोधाभावाच्च ।

अतो बुद्धिमदेककर्तृकत्वे साध्ये,कार्यत्वस्य अनैकान्त्यम् । पक्षस्याप्रसिद्धविशेषणत्वम् । साध्यविकलता च दृष्टान्तस्य । सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः । बुद्धिमत्कर्तृकत्वमात्रे सिद्धसाध्यता । सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम् , उत क्रमेणोत्पद्यमानसर्ववस्तुगतम् । युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धिता । क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेऽनेककर्तृकत्वसाधनाद्विरुद्ध-

---

योगबलेन सूक्ष्ममपि दूरस्थमपि वस्तु दृश्यते । इन्द्रादीनां चास्मदाद्यपेक्षयाऽधिकसामर्थ्यं प्रसिद्धमेव । **तदतिरिक्तेति** । सिद्धेष्वेव जीवेषु अदृष्टातिशयकल्पने लाघवम् । अत्यन्तादृष्टस्य पुरुषस्यैव कल्पनं तु गौरवग्रस्तत्वान्नोपपद्यते । धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायादिति भावः । **न चेति** । सर्वस्य जगतो युगपन्नाशो युगपदुत्पत्तिश्च न प्रमाणसिद्धेत्यर्थः । **विरोधाभावाच्चेति** । जगतः क्रमिकोत्पत्तौ क्रमिकनाशे च कल्प्यमाने कश्चन विरोधो नास्तीत्यर्थः ।

अथ फलितं दूषणं दर्शयति—**अत इति । अनैकान्त्यम्** । व्यभिचारः । अनेककर्तृकप्रासादादिषु बुद्धिमदेककर्तृकत्वाभावेऽपि कार्यत्वदर्शनेन कार्यत्वहेतोर्व्यभिचरितत्वान्न तेन बुद्धिमदेककर्तृकत्वं सिध्यतीत्यर्थः । ननु बुद्धिमदेककर्तृकत्वं नाम सर्वज्ञः सर्वशक्तिश्च यः परमात्मा तदेककर्तृकत्वम् । तच्च प्रासादादिष्वप्यन्ततोऽस्तीत्यनुमेयमेवेति न व्यभिचार इति चेत्तत्राह—**पक्षस्येति** । महानसादौ प्रसिद्धस्य वन्हिमत्त्वस्य पर्वतो वन्हिमानित्यत्र पर्वतविशेषणत्वं युक्तम् । जगत्सर्वज्ञसर्वशक्त्येकपरमात्मकर्तृकमिति त्वदुक्तानुमाने तु सर्वज्ञसर्वशक्त्येकपरमात्मकर्तृकत्वस्यान्यत्राप्रसिद्धस्य जगद्विशेषणत्वं न संभवति । सर्वज्ञसर्वशक्त्येकपरमात्मकर्तृकत्वस्याप्रसिद्धत्वादेव च घटादिदृष्टान्तस्य साध्यरहितत्वमिति भावः । तदेवोपपादयति—**सर्वनिर्माणेति** । सकर्तृकत्वमात्रं साध्यमिति पक्षे दूषणमाह—**बुद्धिमदिति । सिद्धसाध्यतेति** । वेदान्तिभिरस्माभिरपि जगतो बुद्धिमत्कर्तृकत्वस्याङ्गीकारात् । **सार्वज्ञ्येति** । यथा घटरूपविशेषकार्यनिष्ठकार्यत्वेन, कर्तृविशेषः कुलालः साध्यते न तु सामान्यतः कार्यत्वेन, तथा सर्वज्ञसर्वशक्तियुक्तपरमात्मनः कर्तृविशेषस्य साधकमिदं कार्यत्वं किंचिद्विशेषकार्यनि-

ता। अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधश्च। शास्त्रविरोधश्च। कुम्भकारो जायते, रथकारो जायत इत्यादि श्रवणात्।

अपि च, सर्वेषां कार्याणां शरीरादीनां सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्यमाश्रयणीयम्। कार्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः। तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण। पुरुषस्य च तद्योगः कर्ममूल इति कार्यविशेषारम्भायैव ज्ञानशक्तिवत् कर्तुः कर्मसम्बन्धः कार्यहेतुत्वेनैवावश्याश्रयणीयः।

---

ष्ठमित्यवश्यं वाच्यम्। तत्किं युगपदुत्पद्यमानसर्ववस्तुगतमुत क्रमेणोत्पद्यमानसर्ववस्तुगतं वा। नाद्यः। सर्वस्य युगपदुत्पत्तेरसंभवेन तन्निष्ठकार्यत्वस्यासिद्धत्वात्। नान्त्यः। क्रमेणोत्पद्यमानघटपटरथादिसर्ववस्तूनामेकस्मादुत्पत्तेर्लोकेऽदर्शनेन तादृशसर्ववस्तुनिष्ठकार्यत्वस्य त्वदुक्तसाध्यविरुद्धत्वात्। **अत्रापीति**। क्रमेणोत्पद्यमानघटपटरथादिसर्ववस्तूनामेकस्मादेवोत्पत्तिरित्यङ्गीकारे तेषां कुम्भकारकुविन्दरथकाराद्यनेककर्तृकत्वं प्रत्यक्षत उपलभ्यमानं विरुद्धं स्यात्। अयं कुलालः न द्वीपान्तरस्थघटकर्ता द्वीपान्तरागमनादित्याद्यनुमानानि च विरुद्धानि स्युः। **कुम्भकार इति**। कुम्भरथयोरेककर्तृकत्वे कुम्भकाररथकारयोरुत्पत्तेः पृथक् वक्तुमशक्यत्वात्।

प्रकारान्तरेण विरोधं दर्शयति—**अपि चेति**। **सत्वादीति**। आदिना रजस्तमसोः सङ्ग्रहः। सत्वादिगुणानां कार्यं यत्सुखादि तत्सम्बन्धः शरीरादिषु सर्वत्र दृश्यते। सुखादीत्यादिशब्देन दुःखमोहग्रहणम्। यथैकस्मिन्नेव कान्ताशरीरे सुखदुःखमोहसंबन्धः। तत्पत्युस्तच्छरीरात्सुखोत्पत्तेः। तां चिन्तयतस्तामप्राप्तवतश्च दुःखोत्पत्तेः। तामचिन्तयतोऽन्यस्य मोहोत्पत्तेश्च। मोह औदासीन्यम्। एवं सर्वत्र गुणत्रयसम्बन्धो बोध्यः। **सत्वादिमूलत्वम्**। सत्वादिगुणविशिष्टद्रव्यकारणकत्वम्। ननु सत्वादिगुणविशिष्टद्रव्यस्य शरीरं प्रति कारणत्वेपि तत्रत्यानां गुणानां कथं कारणत्वम्। न हि तन्तुरूपं पटं प्रति कारणं भवतीति चेत्तत्राह—**तेषामिति**। शरीरादीनामित्यर्थः। शरीरसंसृष्टमनसि विकारोत्पादकत्वेन गुणानां शरीरकारणत्वमुपचर्यते इत्याशयः। **तद्योगः**। शरीरयोगः। **ज्ञानशक्तिवदिति**। यथा पूर्वपक्षिणा कर्तृसाधकेन कार्यत्वेन हेतुना कर्तुः कार्योपादानज्ञानं कार्यकरणसामर्थ्यं चानुमीयते तथा तेनैव हेतुना कर्तरि कर्मसम्बन्धोऽवश्यमनुमेयः। अन्तरेण कर्म ज्ञानशक्तिवैचित्र्यासंभवात्। तथा चानुमानेन सिध्यन् कर्ता कर्मवश्य एवेति जीव एव स भवितुमर्हति। अतो नानुमानेनेश्वरसिद्धिरित्याशयः। नन्वीश्वर इच्छामात्रादेव जगत्सृजतीति तत्र कर्ममूलकस्य ज्ञानशक्तिवैचि-

ज्ञानशक्तिवैचित्र्यस्य कर्ममूलत्वात् । इच्छायाः कार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्याः सत्त्वादिमूलत्वेन कर्मसम्बन्धोऽवर्जनीयः । अतः क्षेत्रज्ञा एव कर्तारो, न तद्विलक्षणः कश्चिदनुमानात् सिध्यति । भवन्ति च प्रयोगाः । तनुभुवनादि क्षेत्रज्ञकर्तृकं कार्यत्वाद्घटादिवत् । ईश्वरः कर्ता न भवति, प्रयोजनशून्यत्वान्मुक्तवत् । ईश्वरः कर्ता न भवत्यशरीरत्वात् ,तद्वदेव । नच, क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः । तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात् । विमतिविषयः कालो न लोकशून्यः, कालत्वाद्वर्तमानकालवत् ।

अपि च, किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति । न तावदशरीरः । तस्य कर्तृत्वानुपलब्धेः । मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति । मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात् । नापि सशरीरः । विकल्पासहत्वात् । तच्च शरीरं किं नित्यमनित्यं वा । न तावन्नित्यम् । सावयवस्य तस्य नित्यत्वेन जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम् । तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात् । स्वयमेव हे-

---

च्यस्यानपेक्षितत्वान्न तस्य कर्मवश्यत्वमिति चेत्तत्राह–**इच्छाया इति**। प्रतिकूलानुमानानि दर्शयति–**भवन्ति चेति। तद्वदेव**। मुक्तवदेव । **न चेति**। जीवस्य स्वशरीरकर्तृत्वावस्थायामकर्तृत्वाभावेप्यशरीरत्वस्य सत्वेनाशरीरत्वहेतुर्व्यभिचरति इत्याशयः । **सद्भावादिति** । यथा बालशरीरविशिष्टो जीवो युवशरीरं परिगृण्हाति तद्वदेवेदं बोध्यम् । प्रतिकूलानुमानान्तरमाह–**विमतीति । न लोकशून्य इति** । तथा च जीवविशिष्टलोकस्य सर्वदा सद्भावेन जगन्निष्ठकार्यत्वस्य जीवैरेव सिद्धत्वेन नेश्वरानुमानावसर इति भावः ।

पूर्वपक्ष्युक्तानुमानं प्रकारान्तरेण दूषयति–**अपि चेति । नित्यत्वेऽपीति** । अपिशब्देन स्वमते मनसो नित्यत्वानभ्युपगमं सूचयति । **सावयवस्येति** । ईश्वरशरीरस्य सावयवस्यापि सतो नित्यत्वेऽङ्गीक्रियमाणे सावयवस्य जगतोऽपि नित्यत्वप्रसङ्गः । नित्यत्वे च तस्य जगज्जन्मादिकर्तृत्वाभावेनेश्वरत्वं न सिध्यतीत्यर्थः। **तद्व्यतिरिक्तस्येति**। शरीरस्यानित्यत्वे तदुत्पत्तिवेलायां तच्छरीरहेतुभूतस्य तच्छरीरव्यतिरिक्तस्यान्यस्य शरीरस्याभावादनित्यत्वपक्षो न संभवतीत्यर्थः । **स्वयमेव** । केवलपरमात्मैव ।

वुरिति चेत् , न । अशरीरस्य तदयोगात् । अन्येन शरीरेण सशरीर इति चेत्, न । अनवस्थानात् ।

स किं सव्यापारो, निर्व्यापारो वा । अशरीरत्वादेव न सव्यापारः । नापि निर्व्यापारः कार्यं करोति । मुक्तात्मवत् । कार्यं जगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वं, दृष्टान्तस्य च साध्यहीनता । अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरेश्वरः पुरुषोत्तमः । शास्त्रन्तु, सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु, निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवस्य द्रव्यस्य कार्यत्वञ्चानुपलब्धमशक्यप्रतिपादनमित्युक्तं, तदप्यविरुद्धमिति, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' ( ब्र. सू. १।४।२३ ) 'न वियदश्रुतेः' ( ब्र. सू. २।३।१ ) इत्यत्र प्रतिपादयिष्यते । अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् ,

---

**अनवस्थानादिति** । यदि बीजाङ्कुरन्यायेन नानवस्थादोष इत्युच्यते तदापि सशरीरत्वेनेश्वरस्य कर्मवश्यत्वं स्यादेवेति दोषो बोध्यः ।

पुनः प्रकारान्तरेण पूर्वपक्ष्युक्तानुमानं दूषयति—**स किमिति** । स ईश्वरः । **इच्छामात्रेति** । मात्रशब्देन सत्वादिगुणसम्बन्धस्य तन्मूलकर्मसम्बन्धस्य च व्यावृत्तिः । **अप्रसिद्धविशेषणत्वम्** । अप्रसिद्धसाध्यकत्वम् । **साध्यहीनतेति** । घटादौ दृष्टान्ते निर्व्यापारकर्तृकत्वस्यादर्शनात् । **शास्त्रैकप्रमाणक इति** । नन्वेवमपि अव्यापारस्याशरीरस्य च परमात्मनो जगत्कर्तृत्वासंभवस्तदवस्थ एव । लोके तथाऽदर्शनादिति चेन्न । शब्दानपेक्षतया केवलानुमानेनेश्वरं साधयतस्तवैव दृष्टान्तापेक्षा न तु ममेति भावः । तदेव ध्वनयन्नाह—**शास्त्रं त्विति** । **प्रकृतिश्चेति** । प्रकृतिरुपादानकारणम् । ईश्वरो न केवलं जगतो निमित्तकारणं किन्तूपादानकारणमपि । यतस्तथा सत्येव श्रुत्युक्तौ प्रतिज्ञादृष्टान्तौ नोपरुध्येते । 'येनाश्रुतं श्रुतं भवति' ( छां. ६।१।३ ) इत्यादि प्रतिज्ञा । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' ( छां. ६।१।४ ) इति दृष्टान्तः । **न वियदिति** । वियन्नोत्पद्यते, श्रुतौ तदुत्पत्तेरप्रतिपादनादिति पूर्व-

'यतो वा इमानि ' ( तै. ३।१।१ ) इत्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥ ३ ॥

---

यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथापि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं बोधयतीत्याशङ्क्याह—

# तत्तु समन्वयात् ॥ ४ ॥

प्रसक्ताशङ्कानिवृत्त्यर्थः ' तु ' शब्दः । ' तत् ' शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव । कुतः । ' समन्वयात् ' । पुरुषार्थतयान्वयः समन्वयः । परमपुरुषार्थभूतस्य ब्रह्मणोऽभिधेयतयान्वयात् । एवमेव समन्वितो औपनिषदः पदसमुदायः—' यतो वा इमानि भूतानि जायन्ते ' ( तै. ३।१।१ ) ' सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत ' ( छां. ६।२।२–३ ) ' ब्रह्म वा इदमेकमेवाग्र आसीत् ' ( बृ. १।४।१० ) ' आत्मा वा इदमेक एवाग्र आसीत् ' ( ऐ. १।१ ) ' तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ' ( तै. २।४।१ ) ' एको ह वै नारायण आसीत् ' ( म. १ ) ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै. २।१।१ )' आनन्दो ब्रह्म ' ( तै. ३।६।१ ) इत्येवमादिः । न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिल-

---

पक्षं कृत्वा सूत्रकारैरग्रे ' आत्मन आकाशः सम्भूतः ' ( तै. २।१।१ ) इति श्रुतेराकाशोत्पत्तिः साधितेति बोध्यम् ॥ ३ ॥

---

**न शास्त्रमिति ।** सिद्धब्रह्मप्रतिपादकत्वे स्वीकृते तु शास्त्रं न कस्यचित्प्रवर्तकं निवर्तकं वा स्यात् । तथात्वे तु तस्य सुखपर्यवसायित्वं दुःखनिवृत्तिपर्यवसायित्वं वा नास्तीति शास्त्रमपि ब्रह्मण्यप्रमाणं स्यादित्याशयः ।

**अभिधेयतया ।** वाच्यतया । ब्रह्मणि शास्त्रस्य वाचकत्वेन सम्बन्धाद्ब्रह्मणः शास्त्रप्रमाणकत्वं भवत्येवेति फलितोऽर्थः । **व्युत्पत्तिसिद्धेति ।** ब्रह्मणि समन्वितानां श्रुतीनां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहेणान्यपरत्वं अप्रमाणत्वरूपं कर्तृस्तावकत्वादिरूपं वा न कल्पयितुं शक्यम् । सिद्धे वस्तुन्यपि शब्दानां व्युत्पत्तेरुपपादनादिति भावः । ननु

जगदुत्पत्तिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम् । स्वविषयावबोधपर्यवसायित्वात् सर्वप्रमाणानाम् । न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः । प्रयोजनं हि प्रमाणानुगुणम् । न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम् । पुरुषार्थान्वयप्रतीतेः । तथा स्वरूपपरेष्वपि, पुत्रस्ते जातो, नायं सर्प इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम् ।

अत्राह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति । प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात् । यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति । तथापि शास्त्रं प्रयोजनपर्यवसाय्येव । नहि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः । न च, किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति । तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम् । अर्थार्थी राजकुलं गच्छेत् । मन्दाग्निर्नाम्बु पिबेत् । स्वर्गकामो यजेत । न कलञ्जं भक्षयेदित्यादिषु ।

---

प्रवृत्तिनिवृत्त्यन्यतरप्रयोजनविरहे कथं प्रामाण्यमित्यत्राह—**स्वविषयेति** । प्रमाणानां विषयावबोधे तात्पर्यं न तु प्रयोजनपर्यन्तम् । अत एव निष्प्रयोजनस्यापि लोष्टादिप्रत्यक्षस्य प्रामाण्यमङ्गीकृतमभियुक्तैः । तदेवाह—**न च प्रयोजनेति** । अथ ब्रह्मप्रतिपादकश्रुतीनां प्रवृत्तिनिवृत्त्यन्यतरप्रयोजनविरहेऽपि तद्व्यतिरिक्तं प्रयोजनमप्यस्तीत्याह—**न च प्रवृत्तीति । स्वरूपपरेषु** । सिद्धार्थप्रतिपादकेषु । पुत्रस्ते जात इत्यस्य हर्षः प्रयोजनम् । नायं सर्प इत्यत्र भयनिवृत्तिः प्रयोजनमिति बोध्यम् ।

अथास्मिन्नधिकरणे पूर्वपक्षं विस्तरेण प्रतिपादयति—**अत्राहेति** । मीमांसकमतमेतत् । **प्रवृत्तीति** । अत एवोक्तं वार्तिककृता ‘ यावत्खलु प्रमातॄणां प्रवर्तननिवर्तने । शब्दा न कुर्वते तावन्न निराकांक्षबोधनम् ’ इति । **शास्त्रस्येति** । शासनाद्धि शास्त्रम् । शासनं च प्रवर्तननिवर्तनात्मकमेवेत्याशयः । **प्रयोजनरहितस्येति** । अत एव पुनरुक्तेर्दोषत्वमुक्तं साहित्यशास्त्रे । तत्र हि दोषत्वबीजं प्रयोजनशून्यत्वमेव । **अर्थार्थी** । द्रव्यार्थी । **मन्दाग्निः** । मन्दो जाठराग्निर्यस्य । **अम्बु** । उदकम् ।

यत्पुनः, सिद्धवस्तुपरेष्वपि, पुत्रस्ते जातो, नायं सर्पो रज्जुरेषेत्यादिषु हर्षभयादिनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम् । तत्र किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानादिति विवेचनीयम् । सतोऽप्यर्थस्याज्ञातस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत् । तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम् । तस्मात् सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवात् न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ।

अत्र कश्चिदाह—वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति । कथम् । निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वमिति । कोऽसौ द्रष्टृदृश्यरूपप्रपञ्चविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः । 'न दृष्टेर्द्रष्टारं पश्येः, न मतेर्मन्तारं मन्वीथाः' ( बृ. ३।४।२ ) इत्येवमादिः । द्रष्टृदृश्यभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः । स्वतःसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण साध्यत्वमविरुद्धमिति ।

तदयुक्तम् । नियोगवाक्यार्थवादिना हि नियोगो, नियोज्यविशेषणं,

---

**अर्थपरत्वाभावेनेति** । यद्यपि वेदान्तशास्त्रं मोक्षरूपप्रयोजनपर्यवसायि, तथापि स मोक्षो ब्रह्मज्ञानादेव न तु ब्रह्मस्वरूपादित्यतो मोक्षे ब्रह्मस्वरूपस्यानुपयोगेन शास्त्रस्य ब्रह्मस्वरूपसिद्धवस्तुप्रतिपादकत्वतात्पर्याभावेन न शास्त्रं ब्रह्मसद्भावे प्रमाणमित्याशयः ।

**निष्प्रपञ्चमिति** । तथा च सिद्धस्यापि ब्रह्मणः प्रपञ्चराहित्यस्वरूपेणाकारान्तरेण साध्यत्वमिति भावः । **कोसाविति** । कतिपयनाशेऽप्यशक्तस्य सकलप्रपञ्चनाशनविधिरशक्य इत्याशयः । **न दृष्टेरिति** । प्रपञ्चस्याविद्यापरिणामरूपत्वाद्बुद्धिनिवृत्तिमात्ररूपः प्रपञ्चलयः शक्य एवेत्याशयः । **दृशिमात्रमिति** । मात्रशब्देनाविद्यानिवृत्तिः ।

पूर्वपक्ष्येतद्दूषयति–**तदयुक्तमिति** । **नियोगेति** । नियोगो विधिः । स एव वाक्यार्थ इति वादिनेत्यर्थः । **नियोज्येति** । नियोज्यस्य नियोक्तुं शक्यस्य विशेषणम् । यथा

विषयः, करणम्, इतिकर्तव्यता, प्रयोक्ता च वक्तव्याः। तत्र हि नियोज्यविशेषणमनुपादेयम्। तच्च निमित्तं, फलमिति द्विधा। अत्र किं नियोज्यविशेषणम्, तच्च किं निमित्तं फलं वेति विवेचनीयम्। ब्रह्मस्वरूपयाथात्म्यानुभव इति चेत्, तर्हि न तन्निमित्तम्। जीवनादिवदस्यासिद्धत्वात्। निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवन्नित्यं तद्विषयानुष्ठानप्रसङ्गः। नापि फलम्। नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्। कश्चात्र नियोगविषयः। ब्रह्मैवेति चेत्, न। तस्य नित्यत्वेनाभव्यरूपत्वात्। अभावार्थत्वाच्च। निष्प्रपञ्चं ब्रह्म साध्यमिति चेत्। साध्यत्वेऽपि फलत्वमेव, अभावार्थत्वान्न विधिविषयत्वम्। साध्यत्वञ्च कस्य। किं, ब्रह्मण उत प्रपञ्चनिवृत्तेः। न तावद्ब्रह्मणः, सिद्धत्वादनित्यत्वप्रसक्तेश्च। अथ प्रपञ्चानिवृत्तेः, न तर्हि ब्रह्मणः साध्यत्वम्। प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्, न। तस्याः फलत्वेन

---

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र नियोक्तुं शक्यस्य कर्तुर्विशेषणं स्वर्गकाम इति। **विषयः।** विधिविषयो विधेय इति यावत्। स च यागादिः क्रियारूपः। **करणम्।** यागादिरेव भावनारूपकार्यनिष्पत्तौ करणम्। साधनम्। **वक्तव्या इति।** न दृष्टेरिति निष्प्रपञ्चीकरणविधाविति शेषः। आदौ नियोज्यविशेषणं दूषयति—**तत्रेति। अनुपादेयम्।** विधेयभिन्नम्। अथवात्र वक्तुमशक्यमित्यर्थः। **निमित्तमिति।** यथा यावज्जीवमग्निहोत्रं जुहुयादित्यत्र नियोज्यस्य कर्तुर्जीवनं विशेषणम्। यथा वा मलिनवपुः स्नायादित्यत्र नियोज्यस्य स्नानकर्तुर्मलिनवपुष्ट्वं विशेषणं निमित्तभूतम्। तस्य सिद्धत्वात्। **फलमिति।** यथा स्वर्गकामो यजेतेत्यत्र स्वर्गरूपं विशेषणं फलभूतम्। तस्यासिद्धत्वात्। **ब्रह्मस्वरूपयाथात्म्यानुभव इति।** तथा चैतादृशानुभववान्निष्प्रपञ्चीकरणविधौ नियोज्य इत्यर्थः। **नित्यत्वेन।** कदाप्यविनाशित्वेन। **नैयोगिकम्।** विधिसम्बन्धि। विषयं दूषयति—**कश्चेति। अभव्यरूपत्वात्।** असाध्यरूपत्वात्। **अभावार्थत्वात्।** क्रियारूपत्वाभावात्। शङ्कते—**निष्प्रपञ्चमिति।** तथा च ब्रह्मणो निष्प्रपञ्चत्वस्वरूपेण साध्यत्वमित्याशयः। **साध्यत्वेऽपीति।** त्वदुक्तरीत्या ब्रह्मणः साध्यत्वेऽपि फलत्वं स्यान्न तु विधिविषयत्वम्। क्रियारूपत्वाभावात्। विषयस्य फलव्यतिरिक्तत्वनियमाच्चेति भावः। **न तर्हीति।** तथा च ब्रह्मणः साध्यत्वाभावहेतुकोऽपि विधिविषयत्वाभावः सिद्ध इत्यर्थः। शङ्कते—

विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः । स च फलम् । अस्य च नियोगाविषयत्वे, नियोगात् प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम् ।

अपि च, किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः, सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित् प्रयोजनम् । नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत्, तत् स्ववाक्यादेव जातमिति न नियोगेन प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् , सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य निवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः । यदि ब्रह्मस्वरूपमेव निवर्तकं, नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति । नित्यत्वेन च नियोगस्य विषयानुष्ठानसाध्यत्वञ्च न घटते । अथ ब्रह्मस्वरूपव्यतिरिक्तः, तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता[1] च न दृष्ट इत्याश्रयाभावादसिद्धिः । प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् , न नियोगनिष्पाद्यं मोक्षाख्यं फलम् ।

---

**प्रपञ्चेति । स च फलमिति** । तथा च मोक्षरूपायाः प्रपञ्चनिवृत्तेः फलत्वात्फलभूतायास्तस्या न विषयत्वमित्यर्थः । **अस्य चेति** । प्रपञ्चनिवृत्तेर्विधिविषयत्वेन प्रपञ्चनिवृत्त्या विधिसिद्धिः । प्रपञ्चनिवृत्तेः फलत्वेन च विधिसिध्युत्तरं प्रपञ्चानिवृत्तिसिद्धिरित्यन्योन्याश्रय इति भावः । एतेन निष्प्रपञ्चीकरणनियोगो दूषित इति बोध्यम् ।

अथ निष्प्रपञ्चीकरणविधिं प्रकारान्तरेण दूषयति—**अपि चेति । न किंचिदिति** । रज्जुज्ञानेनैव सर्पनिवृत्तिसिद्धौ सर्पनिवृत्तिविधिरप्रयोजक इति भावः । शङ्कते—**नियोगस्त्विति । स्ववाक्यात्** । प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वप्रतिपादकवाक्यात् । ननु प्रपञ्चस्य सत्यत्वमेवेति द्वितीयपक्ष एवाश्रीयते । तथा च तस्य ज्ञाननिवर्त्यत्वाभावेन तदर्थं विधिरावश्यक इति चेत्तत्राह—**प्रपञ्चस्येति । नित्यतया** । प्रपञ्चनिवर्तकस्य ब्रह्मस्वरूपस्य नित्यतया । **ब्रह्मस्वरूपव्यतिरिक्तः** । कृत्स्नप्रपञ्चनिवृत्तिविषयको विधिर्ब्रह्मस्वरूपव्यतिरिक्तश्चेदित्यर्थः । **आश्रयाभावादिति** । एतेन

---

[1] क. प्रयोक्ता च नष्टः ।

किञ्च, प्रपञ्चनिवृत्तेर्नियोगकरणस्येतिकर्तव्यताभावादनुपकृतस्य च करणत्वायोगात् न करणत्वम्। कथमितिकर्तव्यताभाव इति चेत्। इत्थम्। अस्येतिकर्तव्यता भावरूपा अभावरूपा वा। भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्यभेदभिन्ना। उभयविधा च न सम्भवति। न हि मुद्गराभिघातादिवत् कृत्स्नप्रपञ्चनिवर्तकः कोऽपि दृश्यत इति दृष्टार्था न सम्भवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः सम्भवति। अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्। तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे चाभावत्वादेव न करणशरीरं निष्पादयति। नाप्यनुग्रहम्। अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न सम्भवति।

---

वक्तव्यतया प्राक् (पृ. २०७ पं. १७) निर्दिष्टेषु नियोगादिषु मध्ये प्रयोक्ता दूषितो भवति।

अथ करणमितिकर्तव्यतां च दूषयति—**किं चेति**। प्रपञ्चनिवृत्तिरूपं यद्भावनाकरणं तत् किंचित् कृत्वैव भावनां जनयेत्। अन्यथा करणत्वायोगात्। करणस्य व्यापारवत्त्वनियमात्। तथा च करणस्येतिकर्तव्यताऽवश्यं वाच्या। सा चात्र करणस्य प्रपञ्चनिवृत्तिरूपत्वेन न संभवतीत्यर्थः। **अस्य**। प्रपञ्चनिवृत्तिरूपस्य करणस्य। **कार्यभेदभिन्नेति**। भावरूपा इतिकर्तव्यता च क्वचित्करणशरीरं निष्पादयति। यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागीयया इतिकर्तव्यतया यागस्वरूपं निष्पाद्यते। क्वचिच्च करणात्कार्यनिष्पत्तिवेलायां प्राक्सिद्धस्वरूप एव करणे अनुग्रहं करोति। यथा चक्षुषा पश्यतीत्यत्र विषयेन्द्रियसम्बन्धरूपा चक्षुष इतिकर्तव्यता दर्शनवेलायां चक्षुष्यनुग्रहं करोति। एवं कार्यभेदेन द्विविधापि भावरूपेतिकर्तव्यताऽत्र न सम्भवतीत्यर्थः। **दृष्टार्थेति**। कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरस्य निष्पादिका भावरूपेतिकर्तव्यता दृष्टार्था नैवोपलभ्यते इत्यर्थः। **अनुग्राहकांशेति**। अनुग्राहकं यत् तत् कृत्स्नप्रपञ्चान्तर्गतमेवेत्यनुग्राहकांशसत्वे कृत्स्नप्रपञ्चनिवृत्तेर्वक्तुमशक्यत्वात्। शङ्कते—**ब्रह्मण इति**। अथाभावरूपेतिकर्तव्यतां दूषयति—**अभावरूपत्वे इति**। एवं निष्प्रपञ्चीकरणविधिवादिनो मृषावादिनो मतं निरस्तम्।

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यं, तथापि ब्रह्मस्वरूपं सिध्यत्येव। कुतः, ध्यानविधिसामर्थ्यात्। एवमेव हि समामनन्ति। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. २।४।५) 'य आत्माऽपहतपाप्मा···· सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छां. ८।७।१) 'आत्मेत्येवोपासीत' (बृ. १।४।७) 'आत्मानमेव लोकमुपासीत' (बृ. १।४।१५) इति। अत्र ध्यानविषयो हि नियोगः, स्वविषयभूतं ध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति। स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा। स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण, 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २।१।१) 'सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्' (छां. ६।२।१) इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव। अत 'एकमेवाद्वितीयम्' (छां. ६।२।१) 'तत् सत्यं, स आत्मा' (छां. ६।८।७) 'नेह नानास्ति किञ्चन' (बृ. ४।४।१९) इत्येवमादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं, तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते। प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधे सति, अनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते। तत्र, ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतवि-

---

अथ ध्यानविधिवादिनो मृषावादिनो मतं खण्डयितुमादौ तद्दर्शयति—**अन्योप्याहेत्यादिना**। **नियोगः**। विधिः। **ध्यानशरीरेति**। ध्यानस्य हि सशरीरत्वं ध्यानविषयद्वारैव। विषयीभूतं ब्रह्म च श्रुतावद्वितीयत्वेनोक्तम्। अद्वितीयत्वमेव च भेदमिथ्यात्वम्। अतो ध्यानशरीरानुप्रविष्टभेदनिषेधपर्यन्तं ध्यानविधेस्तात्पर्यमित्याशयः। **प्रत्यक्षादिभिरिति**। अस्य यद्यपीत्यादिः। **भेदाभेदयोरिति**। अस्य तथापीत्यादिः। भेदप्रतीतेर्न सत्यत्वम्। अन्यथापि तस्याः सिद्धत्वात्। अतोऽनन्यथासिद्धशास्त्रावगतोऽभेद एव परमार्थ इति भावः। **तत्साक्षात्कारफलेनेति**। ब्रह्मध्यानविधिर्हि स्वफलीभूतब्रह्मज्ञानद्वारा अविद्यानिवृत्तिं जनयति। तथा च ध्यानविधिवादिनो मते नि-

विधभेदाद्वितीयज्ञानैकरसब्रह्मभावरूपो मोक्षः प्राप्यते। न च, वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः। अनुपलब्धेः। विविधभेददर्शनानुवृत्तेश्च। तथा सति, श्रवणादिविधानमनर्थकं स्यात्।

अथोच्येत—रज्जुरेषा न सर्प इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात्, रज्जुसर्पवत् बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता, न नियोगेन। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्। मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम्। किञ्च, धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम्। तस्मान्न धर्मसाध्यो मोक्षः। तथा च श्रुतिः, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छां. ८।१२।१) इत्यशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात, न धर्मसाध्यमशरीरत्वमिति विज्ञायते। न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्। अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्। यथाहुः श्रुतयः—

'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (का. १।२।२२)

'अप्राणो ह्यमनाः शुभ्रः' (मुं. २।१।२) 'असङ्गो ह्ययं पुरुषः' (बृ. ४।३।१५) इत्याद्याः। अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्माधर्मसाध्यः। तथा च श्रुतिः—

---

योगः ध्यानविधिः, नियोज्यस्याधिकारिणो विशेषणं अविद्यानिवृत्तिरूपं फलम्, विषयः ध्यानमेव, तदेव कार्यनिष्पत्तौ करणम्, इतिकर्तव्यता शमादिः, प्रयोक्ता च ध्यातेति सर्वे नियोगादयो वक्तुं शक्यन्ते इति भावः। **अनुपलब्धेरिति**। एतेन वाक्यार्थज्ञानमात्रान्मोक्ष इति परास्तम्।

**अवर्जनीयमिति**। ध्यानस्य धर्मरूपत्वादिति भावः। **अपहतिः**। सम्बन्धाभावः। **न च नियोगेनेति**। यथा प्रायश्चित्तविधेः पापनिवृत्तिरूपं फलं तथा ब्रह्मध्यानविधेः

' अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ,

अन्यत्र भूतात् भव्याच्च यत् पश्यसि तद्वद' (का. १।२।१४) इति ।

आपि च, उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति । न तावदुत्पाद्यः । मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् । नापि प्राप्यः । आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात् । नापि विकार्यः । दध्यादिवदनित्यत्वप्रसङ्गात् । नापि संस्कार्यः । संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साधयति । न तावद्दोषापनयनेन । नित्यशुद्धत्वात् ब्रह्मणः । नाप्यतिशयाधानेन । अनाधेयातिशयस्वरूपत्वात् । नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया, न निघर्षणेनादर्शादिवदपि संस्कार्यत्वम् । न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते । किन्त्वविद्यागृहीतस्तत्सङ्गतोऽहं–कर्ता । तत्फलानुभवोऽपि तस्यैव । न चाहं–कर्तैवात्मा । तत्साक्षित्वात् । तथा च मन्त्रवर्णः—

' तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ' ( मुं. ३।१।१ )

' आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ' ( का. १।३।४ )

' एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।

---

शरीरानिवृत्तिरूपं फलमित्याशयः । **अन्यत्रधर्मादिति** । अत्र पुरुषार्थस्य धर्माधर्मसम्बन्धराहित्यमुक्तम् । सम्बन्धश्च साध्यसाधनभाव इति मोक्षस्य तदसाध्यत्वं सिद्धमिति भावः ।

आत्मस्वरूपस्य मोक्षस्य विधिसाध्यत्वं प्रकारान्तरेण दूषयति–**अपि चेति** । अथ क्रियाविषयत्वाभावात्संस्कारविषयत्वाभाव इति दर्शयति–**नित्यनिर्विकारेति** । यत्क्रियाविषयं तत् सविकारमिति व्याप्तेर्निर्विकारत्वेन क्रियाऽविषयत्वम् । यदा दर्पणो हस्ततलादिषु निर्घृष्यते तदा दर्पणाश्रया क्रिया । यदा दर्पणे हस्ततलं निर्घृष्यते तदा हस्ततलाश्रया क्रियेति स्वाश्रयपराश्रयक्रिययोर्दर्पण उदाहरणम् । नन्वात्मनोऽविकारत्वेपि देहगतस्नानक्रियया तस्य संस्कारो दृश्यते इति चेत्तत्राह–**न चेति । अविद्यागृहीतः** । अविद्यया कल्पितः । नन्वात्मनः फलभोक्तृत्वात्स एव संस्कार्य इति चेत्तत्राह–**तत्फलेति । तस्यैव** । अविद्यागृहीतस्यैव । **तत्साक्षित्वात्** ।

कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ' ( श्वे.६।११ ) ' सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापाविद्धम् ।

कविर्मनीषी ' ( ई. ८ ) इति चाविद्यागृहीतादहं—कर्तुरात्मनः स्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते। तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः । यद्येवं, किं वाक्यार्थज्ञानेन क्रियत इति चेत् । मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः । तथा च श्रुतयः—' त्वं हि नः पिता, योऽस्माकमविद्यायाः परं पारं तारयसि ' ( प्र. ६।८ ) ' श्रुतं ह्येवमेव भगवद्दृशेभ्यः, तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि, तं मां भगवांच्छोकस्य पारं तारयतु ' ( छां. ७।१।३ ) ' तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार : ' ( छां. ७।२६।२ ) इत्याद्याः । तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते । तन्निवृत्तिस्तु साध्यापि प्रध्वंसाभावरूपा न विनश्यति । ' ब्रह्म वेद ब्रह्मैव भवति, ' ( मुं. ३।२।९ ) ' तमेव विदित्वातिमृत्युमेति ' ( श्वे. ३।८ ) इत्यादिवचनं, मोक्षस्य वेदनानन्तरभावितां प्रतिपादयन्नियोगव्यवधानतां प्रतिरुणद्धि । न च, विदिक्रियाकर्मत्वेन ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः। उभयकर्मत्वप्रतिषेधात् ।' अन्यदेव तद्विदितादथोऽविदितादपि ' ( के. १।१।३ ) ' येनेदं सर्वं विजानाति, तत् केन विजा-

---

अहङ्कारसाक्षित्वात् । **साक्षी** । अहङ्कारे व्याप्रियमाणे स्वयं साक्षिमात्रतयावस्थानान्न भोक्तेति भावः । **केवलः** । फलसम्बन्धरहितः । **निर्गुणः** । अगुणवश्यः । अत एव न तस्य भोक्तृत्वमित्याशयः । **पर्यगात्** । अमन्यत । **शुक्रम्** । अविद्यारहितम् । **अकायम्** । अशरीरम् । **अस्नाविरम्** । स्नावा शिरा यस्मिन्न विद्यते इत्यस्नाविरम् । **मृदितकषायाय** । नष्टरागद्वेषादिदोषाय । ननु प्रतिबन्धनिवृत्तेः साध्यत्वे तस्या उत्पन्नत्वेन कदाचिन्नाशः स्यादित्यत आह—**तन्निवृत्तिरिति** । नाशस्योत्पत्तिव्यापकत्वं भावविषयकमेवेत्याशयः। **प्रतिरुणद्धीति**। तथा च ब्रह्मज्ञानसमकालमेव मोक्षो न तु ज्ञानानन्तरभाविध्यानोत्तरमितिभावः । ननु विधिशेषतया ब्रह्मणः सिद्धिरिति विधेरावश्यकत्वमिति चेत्तत्राह—**न च विदीति** । वेदनं सामान्यज्ञानम् । ध्यानं तु ज्ञानविशेषः। **अन्यदेव तद्विदितादिति**। विदितात्। ज्ञेयात्। अविदितात्। ज्ञातुः।

नीयात् ' ( बृ. २।४।१४ ) इति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ' ( के. १।१।४ ) इति च । न चैतावता शास्त्रस्य निर्विषयत्वम्। अविद्यापरिकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य। न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम् । अपि त्वविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितज्ञातृज्ञेयज्ञानविभागं निवर्तयाति । तथा च शास्त्रम् — ' न दृष्टेर्द्रष्टारं पश्येर्न मतेः ' ( बृ. ३।४।२ ) इत्येवमादि ।

न च, ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम् । स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च, ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम् । बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः । अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् । न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते । यदि शरीरसम्बन्धः पारमार्थिकः, तर्हि तद्विनाशापेक्षा । स तु, ब्रह्मव्यतिरिक्ततया न पारमार्थिकः । यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जातमित्यवगम्यते । ज्ञानकार्यादर्शनात् । तस्माच्छरीरस्थितिर्भवतु वा मा वा, वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ । अतो न नियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणः सिद्धिः । अपि तु, ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै. २।१।१ ) ' तत्त्वमसि ' ( छां. ६।८।७ ) ' अयमात्मा ब्रह्म ' ( बृ. २।५।१९ ) इति तत्परेणैव पदसमुदायेन सिध्यतीति ।

तदयुक्तम् । वाक्यार्थज्ञानमाताद्बन्धानिवृत्त्यनुपपत्तेः । यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथापि बन्धस्यापरोक्षत्वान्न परोक्षरूपेण वा-

---

अनेन तत्केन विजानीयादित्यनेन च विदिक्रियाकर्मत्वं निषिद्धम् । **नेदं यदिदमुपासते इति** । अनेन ध्यानक्रियाकर्मत्वं निषिद्धम् ।

**न शरीरपातादूर्ध्वमेवेति** । किं तु जीवतोऽपि ज्ञानसमकालमेव मुक्तिरित्याशयः ।

अथैतत् ध्यानविधिवादी दूषयति–**तदयुक्तमिति । अपरोक्षत्वात्** । प्रत्यक्षत्वात् ।

क्यार्थज्ञानेन स बाध्यते। रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां, नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्। आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन। तथा हि। रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो, नायं सर्पो रज्जुरेषेत्याप्तोपदेशाद्वस्तुत्याथात्म्यदर्शने प्रवृत्त :, तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते। न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्। तस्यानिन्द्रियत्वात्। ज्ञानसामग्रीष्विन्द्रियाण्येवापरोक्षज्ञानसाधनानि। न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति। निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात्।

न च ध्यानस्य वाक्यार्थज्ञानोपायता। इतरेतराश्रयत्वात्। वाक्यार्थज्ञाने जाते तद्विषयध्यानं, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति। न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्। तथा सति ध्यानस्य वाक्यार्थज्ञानोपा-

---

**वस्तुयाथात्म्येति**। वस्तुयाथात्म्यस्य यथार्थवस्तुनो यदपरोक्षं प्रत्यक्षज्ञानं तज्जनकीभूता या प्रवृत्तिः सा आप्तोपदेशाद्भवति। भयनिवृत्तिस्तु प्रत्यक्षज्ञानादेवेत्याशयः। **अनिन्द्रियत्वादिति**। अनिन्द्रियस्याप्यालोकस्य प्रत्यक्षज्ञानजनकत्वं तु इन्द्रियानुग्रहद्वारेवेति भावः। **अनभिसंहितेति**। फलानिच्छया कृतेन कर्मणा नष्टा रागादिदोषा यस्य तस्येत्यर्थः। यथाऽव्यवहितवस्तुग्राहकमपीन्द्रियं योगबलेन व्यवहितमपि वस्तु ग्राहयति तथा प्रत्यक्षज्ञानाजनकमपि वाक्यमुक्तविशेषणविशिष्टपुरुषस्य प्रत्यक्षज्ञानजनकं भवतीति न मन्तव्यमित्यर्थः। तत्र हेतुमाह–**निवृत्तेति। स्वविषयेति**। स्वसाध्यज्ञानानतिक्रमदर्शनेनेत्यर्थः। शब्दसाध्यं ज्ञानमप्रत्यक्षमेवेति शब्दः स्वसाध्यमप्रत्यक्षज्ञानं नातिक्रामतीति फलितम्। **तदयोगात्**। वाक्यस्य प्रत्यक्षज्ञानजनकत्वायोगात्।

अथ 'वाक्यार्थावगतिहेतुत्वात्तेषाम्' इति प्राक् (पृ. २१५ पं. ८) उक्तं खण्डयति–**न च ध्यानस्येति। भिन्नविषयत्वमिति**। वाक्यार्थज्ञानं हि द्विविधम्। ध्यानात्पूर्वभावि, ध्यानान्तरभावि च। तयोश्चैकविषयत्वम्। ध्यानस्य प्राथमिकज्ञानस्य चैकविषयत्वम्। तथा च ध्यानजन्यस्य द्वितीयज्ञानस्य न ध्यानकरणत्वमितिनान्योन्याश्रय इत्याशयः। **तथा सतीति**। भिन्नविषयत्वे हि ध्यानानन्तरभाविवा-

यता न स्यात् । न ह्यन्यध्यानमन्यज्ञानौन्मुख्यमुत्पादयति । ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम् । ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं, निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानेनैकविषयं भिन्नविषयं वा । एकविषयत्वे तदेवेतरेतराश्रयत्वम् । भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासम्भवः । किञ्च, ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वात् निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव ।

यतो वाक्यादपरोक्षज्ञानासम्भवाद्वाक्यार्थज्ञानेनाविद्या न निवर्तते । तत एव जीवन्मुक्तिरपि दूरोत्सारिता । का चेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति चेत् , माता मे वन्ध्येतिवदसङ्गतार्थवचनम् । यतः, सशरीरत्वं बन्धः, अशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वप्रतिभासे वर्तमाने, यस्यायं प्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिरिति । न । मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत् , कथं सशरीरस्य मुक्तिः । अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त इति विशेषः । अथ सशरीरत्वप्रतिभासो

---

क्यार्थज्ञाननिरूपितकारणत्वं ध्यानस्य न स्यादिति भावः । ननु ध्यानस्य वाक्यार्थज्ञानहेतुत्वेऽपि न वाक्यार्थज्ञानजन्यत्वमिति प्राथमिकज्ञानानपेक्षणान्नान्योन्याश्रय इति चेत्तत्राह–**ज्ञातार्थेति । हेत्वन्तरेति** । ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादित्याशयः । **नचेति** । ध्यानात्पूर्वभावि ज्ञानं भेदस्यानिवर्तकं सत्यज्ञानादिवाक्यजन्यम्, ध्यानानन्तरभावि ज्ञानं तु भेदनिवर्तकं तत्त्वमस्यादिवाक्यजन्यमिति नान्योन्याश्रय इति न युक्तमित्यर्थः । **तदेवेति** । उभयोर्ज्ञानयोर्योरेकविषयत्वे तयोरेकस्य भेदनिवर्तकत्वमपरस्य नेति वक्तुमशक्यमिति बोध्यम् । **ध्यात्रादीति** । आदिना शमादिसंग्रहः ।

अथ ' न शरीपातात् ' इत्यादिना प्राक् ( पृ. २१५ पं. १० ) उक्तां जीवन्मुक्तिं खण्डयति–**यत इति । सशरीरत्वम्** । सशरीरत्वप्रतिभासः ।

बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेत् , न। ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वात् बाधकज्ञानस्य। कारणभूताऽविद्या कर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानविषयीभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता। किञ्च 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये। अथ सम्पत्स्ये' (छां. ६।१४।२) इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता— 'वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्। बुद्धे क्षेमप्रापणम्। तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत। एतेन परं व्याख्यातम्' (आ. ध. सू. २।९।२१।१३-१७) इति। अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः। अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति।

---

**द्विचन्द्रज्ञानवदिति**। यथा द्विचन्द्रज्ञानबाधके एकश्चन्द्र इति सत्यज्ञाने सत्यपि द्विचन्द्रज्ञानं चक्षुर्दोषसम्बन्धाद्भवति तथा सशरीरत्वज्ञानबाधके अशरीर आत्मेति सत्यज्ञाने सत्यपि अविद्याकर्मादिदोषसम्बन्धात्सशरीरत्वप्रतिभासो यस्य भवति स जीवन्मुक्तः। स प्रतिभासोऽपि न यस्य भवति स विदेहमुक्त इत्याशयः। **सकलेति**। सशरीरत्वप्रतिभासस्तत्कारणीभूतोऽविद्याकर्मादिदोषश्च सकलवस्त्वन्तर्गत एवेति तस्याप्यात्मैक्यज्ञानेन बाधितत्वात्तदनुवृत्तिर्नयुज्यत इति भावः। **कर्मादीति**। आदिशब्देन वासनासंग्रहः। **तेनैव**। बाधकीभूतेनात्मैक्यज्ञानेनैव। **वेदानिति**। वेदचोधितत्रिवर्गसाधनीभूतकर्माणि। इमं लोकममुं च लोकं परित्यज्यात्मानमन्विच्छेत् उपासीत। 'आत्मनि बुद्धे ज्ञाते सति तदेव ज्ञानं क्षेमं मोक्षं प्रापयति' इति यदौडुलोमिनोक्तं तत् शास्त्रैर्विप्रतिषिद्धम्। शास्त्रेषु हि वाक्यार्थज्ञानोत्तरं ध्यानविधिर्बोध्यते। यावदायुषमिति मरणपर्यन्तं ध्यानानुवृत्तिश्च प्रतिपाद्यते। यावन्न विमोक्ष्ये इति शरीरपातावधिश्च मोक्षस्य क्रियते। तयोर्ध्वमायन्नमृतत्वमेतीति नाडीविशेषनिष्क्रमणं च मोक्षाङ्गत्वेन कथ्यते। अर्चिरादिमार्गेण गतिश्च मोक्षात्पूर्वं श्रूयते। औडुलोमिमते दोषान्तरमाह—**बुद्धे चेदिति**। **न दुःखमिति**। नहि ज्ञानिनां मूर्धाभिषिक्तोऽपि क्षुधादुःखमेव तावत्क्षणमात्रं सोढुं प्रभवतीत्याशयः। तथा च प्रत्यक्षविरोधः। एतेन परम् औडुलोम्युक्तमन्यदपि व्याख्यातं निरस्तमित्यर्थः।

तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वेन मोक्षस्यानित्यत्वप्रसक्तिः । प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किञ्च, न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते । किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्षज्ञानेन । नियोगस्तु तदपरोक्षं ज्ञानं जनयति । कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत् । कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् । मनोनैर्मल्यद्वारेणेति चेत् । ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते । तव तु नियोगेन मनसि निर्मले, ज्ञानसामग्री वक्तव्येति चेत् । ध्याननियोगानिर्मलं मन एव साधनमिति ब्रूमः। केनावगम्यत इति चेत् । भवतो वा कर्मभिर्मनो निर्मलं भवति, निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पादयतीति केनावगम्यते ।' विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'( बृ. ४।४।२२ ) 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृ. २।४।५ ) ' ब्रह्म वेद ब्रह्मैव भवति ' ( मुं. ३।२।९ ) इत्यादिभिः शास्त्रैरिति चेत् । ममापि–' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' ( बृ. २।४।५ )' ब्रह्मविदाप्नोति परम् '( तै. २।१।१ ) ' न चक्षुषा गृह्यते नापि वाचा ' ( मुं. ३।१।८ ) ' मनसा तु विशुद्धेन ' ' हृदामनीषा, मनसाभिक्लृप्तः ' ( का. ६।९ ) इत्यादिभिः शास्त्रैर्ध्याननियोगन मनो निर्मलं भवति । निर्मलञ्च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम् । ' नेदं यदिदमुपासते ' ( के. ४ ) इत्युपास्यत्वं प्रतिषिद्धमिति चेत् , नैवम् । नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते । अपि तु, ब्रह्मणि

---

**तस्मादिति**। ब्रह्मणो यत्प्रत्यक्षज्ञानं तदेव फलं यस्य तादृशेन ध्यानविधिनैव बन्धो निवर्तत इत्यर्थः । **प्रतिबन्धेति** । ज्ञानान्मोक्ष इति वदतस्तवापि मोक्षस्य नित्यत्वमिष्टमेवेति यथा प्रतिबन्धनिवृतिरेव ज्ञानसाध्या तथैव ममापि प्रतिबन्धनिवृत्तिरेव ध्यानसाध्येति भावः । **कथं वेति** । प्रतिबन्द्या परिहारोऽयम् । शङ्कते–**मन इति** । पुनः शङ्कते–**मम त्विति** । **केनावगम्यत इति** । कथमेतज्ज्ञायत इत्यर्थः । पुनः शङ्कते–**विविदिषन्तीति** । पुनः शङ्कते–**नेदमिति** । **अत्र** । नेदं यदिदमिति श्रुतौ ।

जगद्वैरूप्यं प्रतिपाद्यते । यदिदं जगदुपासते प्राणिनः, नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि, यद्वाचानभ्युदितं, येन वागभ्युद्यत इति वाक्यार्थः। अन्यथा 'तदेव ब्रह्म त्वं विद्धि' (के. ४) इति विरुध्यते । ध्यानविधिवैयर्थ्यञ्चात्मनः स्यात् । अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ।

यदपि कैश्चिदुक्तं, भेदाभेदयोर्विरोधो न विद्यत इति । तदयुक्तम् । न हि शीतोष्णतमःप्रकाशादिवद्भेदाभेदावेकस्मिन् वस्तुनि संगच्छेते ।

अथोच्येत, सर्वमेव हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वञ्च भिन्नाभिन्नं प्रतीयते । कारणात्मना, जात्यात्मना चाभिन्नं, कार्यात्मना व्यक्त्यात्मना च भिन्नम् । छायातपादिषु विरोधः सहानवस्थाननियमलक्षणो भिन्नाधारत्वरूपश्च । कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते । प्रत्युतैकमेव वस्तु द्विरूपं प्रतीयते । यथा—मृदयं घटः, षण्डो गौरिति । न चैकरूपं किञ्चिदपि वस्तु लौकिकैर्दृष्टचरम् । न च तृणादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः । मृत्सुवर्णगवाश्वाद्यात्मनाव-

---

**वाचानभ्युदितम्** । वागविषयम् । **अभ्युद्यते** । प्रयुज्यते ।

भेदाभेदवादिभास्करमतं दर्शयति- **यदपीति** ।

**कारणात्मनेति** । यथा मृद्रूपेणाभेदः घटादिरूपेण भेदः । यथा च घटघटत्वयोर्व्यक्तिजात्योर्मध्ये जातिरूपेणाभेदः व्यक्तिरूपेण भेदः इति भेदाभेदावुभावपि प्रतीयेते इत्यर्थः । भेदाभेदयोर्विरोधस्तु न । यथा छायातपयोर्न युगपदेकत्र स्थितिस्तथात्र भेदाभेदयोर्युगपदेकत्र न स्थितिरिति वक्तुमशक्यत्वात् । अविरोधेनोपलब्धिमाह—**प्रत्युतेति** । **द्विरूपम्** । कारणरूपं कार्यरूपं च । तथा जातिरूपं व्यक्तिरूपं च । **खण्डादयो** गोव्यक्तिविशेषाः । भेदाभेदयोर्मध्ये नाश्यनाशकरूपो वस्तुविरोधोऽपि नास्तीत्याह—**न च तृणादेरिति** । यथाग्निना तृणस्य नाशो भवति तथात्राभेदेन यदि भेदस्य नाशः स्यात्तर्हि वस्तुविरोधः स्यात् । तथा चात्र भेदस्य नाशादर्शनेन न वस्तुविरोध इति भावः । **मृत्सुवर्णेति** । यदा वस्तु घटरूपेणावस्थितं तदापि तत् मृद्रूपेणावस्थितमेव । एवमेव च यदा वस्तु मुकुटरूपेणावस्थितं तदा तत्सुवर्णरूपेणावस्थितमेवेति न

स्थितस्यैव घटमुकुटषण्डमुण्डगवाद्यात्मना चावस्थानात् । न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्चैक एवाकार इतीश्वराज्ञा । प्रतीतत्वादैकरूप्यं चेत् । प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमभ्युपगम्यताम् । न हि विस्फारिताक्षः पुरुषो घटशरावषण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु, इयं मृदयञ्च घटः, इदं गोत्वमियञ्च व्यक्तिरिति विवेक्तुं शक्नोति । अपि तु, मृदयं घटः षण्डो गौरित्येव प्रत्येति । अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेत् , नैवम् । विविक्ताकारानुपलब्धेः । न हि सूक्ष्ममपि निरीक्षमाणैरिदमनुवर्तमानमिदञ्च व्यावर्तमानमिति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते । यथा संप्रतिपन्नैक्ये कार्यविशेषे चैकत्वबुद्धिरुपजायते । तथैव सकारणे ससामान्ये चैकत्वबुद्धिरविशेषोपजायते । एवमेव देशतः कालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु, तदेवेदमिति प्रत्यभिज्ञा जायते । अतो-द्व्यात्मकमेव वस्तु प्रतीयत इति कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम् ।

अथोच्येत—मृदयं घटः षण्डो गौरितिवत् देवोऽहं मनुष्योऽहमिति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात् । अत

---

भेदोपमर्द इत्याशयः । **अभिन्नस्य** । जातेः । **भिन्नस्य** । व्यक्तेः । जातेरभेद एवाकारः व्यक्तेश्च भेद एवाकारः । तथा च जातिव्यक्त्योरभेदो न सम्भवतीति सर्वत्र भेदाभेदो दुर्वच इति शङ्काशयः । **ईश्वराज्ञेति** । तथा च तयोर्जातिव्यक्त्योस्त्वदुक्तैकैकाकारत्वे प्रमाणं नास्तीति भावः । शङ्कते–**प्रतीतत्वादिति** । **द्वैरूप्यमपि** । तवानिष्टं द्वैरूप्यमपि । **विवेक्तुम्** । भेदेन प्रतिपत्तुम् । **अपि त्विति** । एकमेव वस्तु जात्यात्मनाऽभिन्नं व्यक्त्यात्मना च भिन्नं प्रतीयते इत्यर्थः । शङ्कते–**अनुवृत्तीति** । अनुवृत्तिव्यावृत्तिभ्यां कारणकार्ययोर्जातिव्यक्त्योश्च भेद इत्याशयः । **विविक्ताकारः** । भिन्नाकारः । **यथेति** । संप्रतिपन्नं ज्ञातमैक्यं यस्यैवंभूतेकार्ये एवंभूतायां व्यक्तौ चैकत्वबुद्धिर्यथा भवति तथैव कारणविशिष्टेपि कार्ये जातिविशिष्टायामपि व्यक्तावेकत्वबुद्धिर्भवतीत्यर्थः । **विशेषे** । व्यक्तौ । **अविशेषा** । तुल्या ।

शङ्कते–**अथेति** । **आत्मशरीरयोरिति** । आत्मशरीरयोः सद्द्व्यात्मनैकत्वेऽपि आ-

इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायत इति ।

तदिदमनाकलितभेदाभेदसाधनसामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम् । तथा हि । अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति । देवाद्यात्माभिमानस्त्वात्मयाथात्म्यगोचरैः सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति । षण्डो गौर्मुण्डो गौरिति सामानाधिकरण्यस्य न केनचित् क्वचिद्बाधो दृश्यते । तस्मान्नातिप्रसङ्गः । अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः । अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्राभेद एव स्वाभाविको, भेदस्त्वौपाधिकः । कथमिदमवगम्यत इति चेत् 'तत्त्वमसि' (छां. ६।८।७) 'नान्योऽतोऽस्ति द्रष्टा' (बृ. ३।७।२३) 'अयमात्मा ब्रह्म' (बृ. २।५।१९) इत्यादिभिः श्रुतिभिः। 'ब्रह्मेमे द्यावापृथिवी' इति प्रकृत्य—

'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत ।
स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्'

इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (श्वे. ६।१३) 'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वे. १।९) 'क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः' (श्वे. ५।१२) 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वे. ६।१६) 'स का-

---

त्मरूपेण शरीररूपेण वा तयोरैक्यस्याप्रामाणिकत्वात्तयोर्भिन्नाभिन्नत्वं नेष्टमित्याशयः।

**अत एव** । भेदाभेदयोरविरुद्धत्वादेव । **तत्रेति** । अनेन 'जीवब्रह्मणोर्भेदाभेदौ स्वाभाविकौ' इति यादवमतं निरस्तम् । अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकाविति तु भास्करयादवयोरुभयोरपि सम्मतम् । **तत्त्वमसीति** । तत्त्वमसीत्यादिश्रुतिभिः ब्रह्म दाशा इत्यादिब्रह्मसूक्तेऽभेदश्रवणाच्च नित्य इत्यादि श्रुतिभिर्भेदश्रवणाच्च जीवब्रह्मणोर्भेदाभेदाववश्याश्रयणीयावित्यन्वयः । **ब्रह्मेति** । दाशाः कैवर्ताः, दासाः भृत्याः, कितवाः द्यूतकृतः एते सर्वे ब्रह्मैवेत्यर्थः । **क्रियेति** । क्रियागुणाः संसारहेतुभूता

रणं करणाधिपाधिपः ' ( श्वे. ६।९ ) ' तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति ' ( श्वे. ४।६ ) ' य आत्मनि तिष्ठन् ' (बृ.३।७।२३) ' प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम् ' ( बृ. ४।३।२१ ) ' प्राज्ञेनात्मनाऽन्वारूढ उत्सृजन् याति ' ( बृ. ४।३।३५ ) ' तमेव विदित्वातिमृत्युमेति ' ( श्वे. ३।८ ) इत्यादिभिर्भेदश्रवणाच्च, जीवपरयोः भेदाभेदाववश्याश्रयणीयौ । तत्र, ' ब्रह्म वेद ब्रह्मैव भवति ' ( मुं. ३।२।९ ) इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात् ' यत्र त्वस्य सर्वमात्मैवाभूत् , तत् केन कं पश्येत् ' ( बृ. २।४।१४) इति तदानीं भेदेनेश्वरदर्शनानिषेधाच्चाभेदः स्वाभाविक इत्यवगम्यते ।

ननु च,' सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ' (तै.२।१।१) इति सहश्रुत्या तदानीमपि भेदः प्रतीयते । वक्ष्यति च ' जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ' (ब्र.सू.४।४।१७) 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू. ४।४।२१) इति ।

नैतदेवम् । ' नान्योऽतोऽस्ति द्रष्टा ' ( बृ.३।७।२३ ) इत्येवमादिश्रुतिशतैरात्मभेदप्रतिषेधात् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति सर्वैः कामैः सह ब्रह्माश्नुते, सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति ।

---

गुणाः । आत्मगुणाः मोक्षहेतुभूता गुणाः । **तदानीम्** । मुक्तिदशायाम् ।

**सह ब्रह्मणेति** । सहशब्दो भोक्तृसाहित्यं दर्शयतीति शङ्काभिप्रायः । **जगदिति** । मुक्तस्यैश्वर्यं जगत्सृष्ट्यादिव्यापारवर्जम् । परमात्मप्रकरणे ' यतो वा'( तै. ३।१।१ ) इत्यादिश्रुतौ जगद्व्यापारप्रतिपादनात् । यदि स व्यापारो मुक्तस्यापि स्यात् तर्हि प्रकरणविरोधः । ब्रह्मलक्षणस्य मुक्तेऽतिव्याप्तिश्च । किं च जगद्व्यापारप्रसङ्गे मुक्तस्य सन्निधानमपि नास्तीति सूत्रार्थः । **भोगेति** । ' सोऽश्नुते ' ( तै. २ ।१। १ ) इति श्रुतौ ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाल्लिङ्गान्मुक्तस्यैश्वर्यं जगद्व्यापारवर्जमेवेति सूत्रार्थः ।

**सह ब्रह्मेति** । सहशब्दो भोग्यसाहित्यं दर्शयति न तु भोक्तृसाहित्यमिति भावः।

अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत । जगद्व्यापारवर्जमित्यत्र मुक्तस्य भेदेनावस्थाने सत्यैश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते । अन्यथा 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र. सू. ४।४।१) इत्यादिभिर्विरोधात् । तस्मादभेद एव स्वाभाविकः । भेदस्तु, जीवानां परस्माद्ब्रह्मणः परस्परश्च बुद्धीन्द्रियदेहोपाधिकृतः । यद्यपि, ब्रह्म निरवयवं सर्वगतञ्च, तथाप्याकाश इव घटादिना, बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदः सम्भवत्येव । न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम् । उपाधेस्तत्संयोगस्य च कर्मकृतत्वात् तत्प्रवाहस्य चानादित्वात् । एतदुक्तं भवति—पूर्वकर्मसम्बद्धात् जीवात् स्वसम्बद्धे एवोपाधिरुत्पद्यते । तद्युक्तात् कर्म । एवं बीजाङ्कुरन्यायेन कर्मसम्बन्धस्यानादित्वाददोष इति । अतो, जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः । भेदस्त्वौपाधिकः । उपाधीनां पुनः परस्परं ब्रह्मणा चाभेदवत्, भेदोऽपि स्वाभाविकः । उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमेऽनवस्थानाच्च ।

---

**अन्यथा ।** ब्रह्मणा सह जीवः सर्वान्कामानश्नुते इति व्याख्याने । भोग्यसाहित्यं गृहीत्वा सर्वैः कामैः सह ब्रह्माश्नुते इति व्याख्याने ब्रह्मणः प्राधान्यमेव । ब्रह्मणा सह सर्वान्कामान् इति व्याख्याने यद्यप्यप्राधान्यं ब्रह्मणस्तथापि तस्य भोग्यभूतस्वगुणापेक्षत्वेन तादृशाप्राधान्यं न दोषायेति बोध्यम् । जगद्व्यापारमिति सूत्रस्य स्वाभिमतमर्थमाह—**जगदिति** । 'जीवेश्वरयोर्भेदे मुक्तस्यैश्वर्यं जगद्व्यापार वर्जं स्यात् प्रकरणात् असन्निहितत्वाच्च । अतस्तयोरभेद एव स्वीकार्यः' इति सूत्रार्थ इति भावः । सम्पद्येति । अयं प्रत्यगात्मा अर्चिरादिमार्गेण परं ज्योतिरुपसंपद्य यं दशाविशेषमापद्यते स स्वरूपाविर्भावरूपः नापूर्वाकारोत्पत्तिरूपः । स्वेन शब्दात् । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.८।३।४) इति श्रुतौ । स्वेन रूपेणेति विशेषणोपादानात् । आगन्तुकदेहपरिग्रहे हि स्वेन रूपेणेति विशेषणमनर्थकं स्यादिति सूत्रार्थः । जीवब्रह्मणोर्भेदे ह्येतत्सूत्रविरोधः स्पष्ट एव । **परस्परं च** । जीवानां परस्परभेदश्च । **स्वसम्बद्धे इति** । कर्मसम्बद्धे जीवे बुद्ध्याद्युपाधिरुत्पद्यते । तादृशोपाधियुक्ताज्जीवात्कर्मोत्पद्यते इत्यर्थः । एतद्भास्करमतस्य मायावादिमनापेक्षया विशेषमाह—**उपाधीनामिति । अनवस्थानादिति** । उपाधिभूतेऽचिदंशे भेदस्यौपाधिकत्वे उपाधेरुपा-

अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधयः उत्पद्यन्ते इति।

अत्रोच्यते। अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते। भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधादनाद्यविद्यामूलतयापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम्। तत्र यदुक्तं, भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध इति। तदयुक्तम्। कस्माच्चित्कस्यचित् विलक्षणत्वं हि तस्मात्तस्य भेदः। तद्विपरीतत्वं चाभेदः। तयोः तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः को ब्रवीति। कारणात्मना जात्यात्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदादविरोध इति चेत्, न। विकल्पासहत्वात्। आकारभेदादविरोध इति वदतः, किमेकस्मिन्नाकारे भेदः, आकारान्तरे चाभेद इत्यभिप्रायः। उताकारद्वययोगिवस्तुगतावुभावपीति। पूर्वस्मिन् कल्पे, व्यक्तिगतो भेदो जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता। जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्, तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात्। एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम्। द्वितीये तु कल्पे 'अन्यो-

---

धिः कल्पनीयः। पुनस्तस्याप्यपर इत्यनवस्था स्फुटैव। अतोऽचिदंशे भेदाभेदौ द्वावपि स्वाभाविकावेवाश्रयणीयौ।

एतद्भेदाभेदवादिभास्करमतं ध्याननियोगवादं दूषयति—**अत्रोच्यत इति**। **विलक्षणत्वम्**। अन्यत्वम्। **तथाभावेति**। तथा च प्रसिद्धयोर्भेदाभेदयोरेकत्र विरोध एवेति सर्वत्र भेदाभेदयोः संभवं वदन्नुन्मत्त एवेत्यर्थः। शङ्कते—**कारणात्मनेति**। **एकस्मिन्नाकारे**। एकस्मिन्पदार्थे। **पूर्वस्मिन्कल्पे इति**। तत्रापि किं जातिव्यक्त्योर्भेदः उताभेदः अथवोभयम्। प्रथमे आह—**व्यक्तिगत इति**। **नैकस्येति**। एकस्य पदार्थस्य भेदाभेदरूपता नेत्यर्थः। द्वितीयं शङ्कते—**जातिरिति**। **आकारभेदात्**। वस्तुभेदात्। तृतीये आह—**एकस्मिन्निति**। **विलक्षणत्वम्**। अन्यत्वम्। **तद्विपर्ययः**। अनन्यत्वम्। **द्वितीये त्विति**। आकारद्वयविशिष्टैकवस्तुनिष्ठौ भेदाभेदौ इति पक्षे अन्योन्यभिन्नं जातिव्यक्तिरूपं आकारद्वयं तस्माद्भिन्नत्वेनानुपलब्धं तदाश्रयभूतं

न्यविलक्षणमाकारद्वयम् , अप्रतिपन्नश्च तदाश्रयभूतं वस्तु ' इति त्रितं-याभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात् । न पुनरभेदः। आकारद्वयनिरूप्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत् । स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेश-निर्वाहकं कथं भवेत् । अविलक्षणं तु कथन्तराम् । आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयानवस्थानात् । न च सम्प्रतिपन्नै-क्यव्यक्तिप्रतीतिवत् ससामान्येऽपि वस्तुन्येकरूपा प्रतीतिरुपजायते । यत इदमित्थमिति सर्वत प्रकारप्रकारितयैव सर्वा प्रतीतिः । तत्र, प्रका-रांशो जातिः प्रकार्यंशो व्यक्तिरिति नैकाकारताप्रतीतिः । अत एव जी-वस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति । तस्मादभेदस्यानन्यथासि-द्धशास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः ।

---

च तृतीयं वस्तु एतद्वस्तुत्रितयाभ्युपगमेऽपि भेद एवोपपादितः स्यान्नाभेदः । अप्रति-पन्नमित्यनेन तृतीयस्य वस्तुनोऽनुपलब्धिरिति दोषः सूचितः । शङ्कते—**आकारेति । भिन्नाभिन्नत्वम्।** भेदाभेदौ । यद्यप्येकस्मिन्वस्तुनि भेदाभेदौ विरुद्धौ तथापि तादृश-वस्तुनिष्ठाकारद्वयेन तयोराविरोध उपपादनीय इत्यर्थः। तत्राकारद्वयमाश्रयापेक्षया भि-न्नमभिन्नं भिन्नाभिन्नं वेति विकल्प्याद्ये आह—**स्वस्मादिति ।** स्वशब्दत्रयमाश्रयभूत-वस्तुप्रतिपादकम् । **कथं भवेदिति ।** न ह्यग्न्यपेक्षया भिन्नमग्निनिष्ठं पैङ्गल्यमौज्वल्यं चेत्याकारद्वयमग्नौ शीतोष्णत्वरूपाविरुद्धधर्मोपपादकं दृश्यते इति भावः। द्वितीये आह—**अविलक्षणमिति ।** आश्रयाद्भिन्नमप्याकारद्वयमाश्रयगतभेदाभेदरूपाविरुद्धधर्मद्वयोप-पादकं न भवति, किमुताश्रयादभिन्नम् । एकस्मादाश्रयादभिन्ने आकारे द्वित्वस्यैव वक्तुमशक्यत्वादिति भावः । तृतीये आह—**आकारद्वयेति ।** आकारद्वयं तदाश्रयश्चे-त्यनयोर्मध्ये यदि भेदाभेदौ तदा तयोर्विरुद्धयोरेकत्रासंभवात्तदुपपादकमन्यदाकार-द्वयं वाच्यम् । तस्याप्युक्तरीत्या स्वाश्रयाद्भेदाभेदाविति तादृशभेदाभेदोपपादकमप-रमाकारद्वयमित्यनवस्थेति भावः । ननु विरुद्धावपि भेदाभेदावुपपादकाभावेप्येकत्र स्वीकार्यौ । जातिव्यक्त्योरैक्यस्य दृष्टत्वात् । ' न हि दृष्टेऽनुपपन्नं नाम ' इति न्या-यादिति चेत्तत्राह—**न चेति ।** संप्रतिपन्नं ज्ञातमैक्यं यस्या एवंभूताया व्यक्तेः प्रती-तिर्यथा एकाकारा भवति तथा जातिविशिष्टव्यक्तेर्न भवतीत्याशयः । **अत एव ।** वि-रुद्धयोर्भेदाभेदयोरेकत्रासम्भवादेव ।

---

१ क. त्रयाणाभ्युपगमेपि०

नन्वेवं, ब्रह्मण एवाज्ञत्वात्तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः। ततश्च, 'यः सर्वज्ञः सर्ववित्' ( मुं. १।१।९ ) 'एष आत्मापहतपाप्मा' ( छां. ८।१।५ ) इत्यादीनि शास्त्राणि बाध्येरन्।

नैवम्। अज्ञत्वादिदोषाणामपरमार्थत्वात्। भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गः, तत्कृताश्च जीवत्वाज्ञत्वादयो दोषा परमार्थत एव भवेयुः। न हि, ब्रह्मणि निरवयवेऽच्छेद्ये सम्बध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा सम्बध्यन्ते। अपि तु, ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति।

यदि मन्वीत—उपाध्युपहितं ब्रह्म जीवः। स चाणुपरिमाणः। अणुत्वञ्चावच्छेदकस्य मनसोऽणुत्वात्। स चावच्छेदकोऽनादिः। एवमुपाध्युपहिते देशे सम्बध्यमाना दोषा अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इति।

इहायं प्रष्टव्यः। १ किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, २ उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, ३ उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, ४ अथोपाधिसंयुक्तं चेतनान्तरम्, ५ अथोपाधिरेवेति। अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्प्यते। आदिमत्त्वञ्च जीवस्य स्यात्। एकस्य सतो द्वैधीकरणं हि छेदनम्। द्वितीये कल्पे, ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः। उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमु-

---

**एवम्**। जीवब्रह्मणोः स्वाभाविकाभेदस्वीकारे।

**उपाधिब्रह्मव्यतिरिक्तम्**। चिदचिद्विशिष्टब्रह्मव्यतिरिक्तम्।

**सः**। जीवः। **अनादिरिति**। अनादित्वानङ्गीकारे हि उपाधिसम्बन्धाज्जीवत्वं जीवत्वाच्चोपाधिसम्बन्ध इत्यन्योन्याश्रयः स्यात्।

दूषयति–**इहायमिति**। **उतोपाधिसंयुक्तमिति**। न चास्मिन्तृतीये पक्षे चतुर्थपञ्चमयोश्च जीवस्याणुत्वाभावात्कथमेषां पक्षाणामुत्थानम्। शङ्काकृता 'स चाणुपरिमाणः' इत्युक्तत्वादिति वाच्यम्। अणुपरिमाण इत्यस्य सूक्ष्म इत्यर्थाभिप्रायेणे-

पाधिसंयुक्तब्रह्मप्रदेशविशेषभेदात् क्षणे क्षणे बन्धमोक्षौ स्याताम्। आकर्षणे चाच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्। निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत्। तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषाञ्च जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसन्धानं स्यात्। प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति, प्रतिसन्धानं न स्यात्। तृतीये तु कल्पे, ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात्, तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्। तुरीये तु कल्पे, ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे, चार्वाकपक्ष एव परिगृहीतः स्यात्। तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम्। अतः प्रवृत्तिनिवृत्तिरूपप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि, ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति।

तदप्ययुक्तम्। ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात्। एतदुक्तं भवति। ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते। उत स्वतन्त्राण्येव। एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न सम्भवति। भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादनवबोधकत्व-

---

तत्पक्षोत्थानात्। **प्रदेशविशेषभेदादिति**। यथा घटे चलति तत्स्थाकाशो न चलति किं तु प्रतिक्षणमन्य एवाकाशस्तत्र प्रविशति तद्वत्। शङ्कते—**निरंशस्येति**। **पूर्वोक्त एव दोषः**। क्षणे क्षणे बन्धमोक्षरूपः। **एक एव जीवः स्यादिति**। तथा च देवदत्तेन कृतस्य कर्मणोनुसन्धानं यज्ञदत्तस्य स्यात्। **तुरीये**। चतुर्थे। **परित्यक्तं स्यादिति**। तथा च 'उपाध्युपहितं ब्रह्म जीवः' इति स्वोक्तिविरोधः। **चरमे**। पञ्चमे पक्षे। **चार्वाकपक्षः**। जडस्यात्मत्वमिति तत्पक्षः।

एतत् ध्याननियोगवादिमतं मीमांसकः पूर्वपक्षी दूषयति—**तदपीति**। **अर्थसत्यत्वे इति**। तथा च प्रतिपाद्यार्थस्य सिद्धत्वेनापूर्वार्थबोधकत्वाभावात्प्रामाण्यं न स्यादित्याशयः। **एकवाक्यतामि**। महावाक्यैकत्वम्। **अनवबोधकत्वमेवेति**। दुःख-

मव । न च वाच्यम् , ध्यानं नाम स्मृतिसन्ततिरूपम् । तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेः स्मर्तव्यविशेषाकाङ्क्षायाम् ‘ इदं सर्वं यदयमात्मा ’ ( बृ. २।४।५ ) ‘ अयमात्मा ब्रह्म, सर्वानुभूतिः ’ ( बृ.२।५।१९ ) ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ ( तै. २।१।१ ) इत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणमिति । ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि, ‘ मनो ब्रह्मेत्युपासीत ’ (छां.३।१८।१) इत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेर्ध्येयसत्यत्वानपेक्षणात् । अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात् ध्यानविधिशेषत्वेऽपि ध्येयविषयस्वरूपसमर्पणमात्रपर्यवसानात् , स्वातन्त्र्येणापि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवतीति प्राप्तम् ।

तत्र प्रतिपाद्यते—तत्तु समन्वयादिति । समन्वयः सम्यगन्वयः, पुरुषार्थतयाऽन्वय इत्यर्थः । परमपुरुषार्थभूतस्यानवधिकातिशयान-

---

साध्ये श्रवणादौ हि प्रवृत्तिरनेन भाव्या । तदप्रयोजकत्वादनवबोधकत्वमेवेत्याशयः । **स्वरूपेति** । ब्रह्मस्वरूपतद्विशेषप्रतिपादिकानि इदं सर्वमित्यादिवाक्यानि ध्यानविधिनैकवाक्यतामापन्नानि ध्यानविषयीभूतब्रह्मरूपार्थसद्भावे प्रमाणमिति न वाच्यमिति सम्बन्धः । **असत्येनापीति** । तथा च ध्यानविषयीभूतार्थप्रतिपादकवाक्यानां ध्यानविधिना सहैकवाक्यत्वेऽपि नावश्यं सत्यार्थबोधकत्वमिति न प्रामाण्यम् । फलीभूतार्थप्रतिपादकवाक्यानां तु विध्येकवाक्यत्वेन प्रामाण्यमेव । फलस्यासत्यत्वे विधेरसम्भवात् । अत एव प्रथमसूत्रे ( पृ. १८० पं. १५ ) इदं सर्वमित्यादिवाक्यानां फलबोधकत्वेन प्रामाण्यमुक्तं न विरुध्यते । **विधुरत्वात्** । रहितत्वात् । **स्वरूपसमर्पणमात्रेति** । मात्रशब्देन स्वरूपसत्यत्वव्यावृत्तिः । **बालातुराद्युपच्छन्दनेति** । उपच्छन्दनं सान्त्वनम् । यथा बालस्य केनचिदपराधे कृते येनापराधः कृतस्तस्य गृहमातपे बध्नामीत्युक्त्या बालः सन्तोषितो भवति ननु तदर्थसत्यत्वमपेक्षते तद्वदिति भावः ।

सिद्धान्ती परिहरति । **तत्रेति** । **परमेति** । परमात्मन आनन्दस्वरूपत्वेन

न्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयात् तच्छास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः । निरस्तनिखिलदोषगन्धनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते । एतदुक्तं भवति । अनादिकर्मरूपाविद्यावेष्टनातिरोहितपरावरतत्त्वयाथात्म्यस्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुषयक्षरक्षःपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजनकं परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि । प्रवृत्तिनिवृत्तिनिष्ठन्तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि । एवम्भूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायाम् ‘ ब्रह्मविदाप्नोति परम् ’ ( तै. २।१।१ ) ‘ आत्मानमेव लोकमुपासीत ’ ( बृ. १।४।१५) इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते । यथा, स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तः सन् पश्चात्तदुपादाने च प्रयतते । यथा च, कश्चित् राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गाद् भ्रष्टो नष्ट इति राज्ञा ज्ञातः स्वयञ्चाज्ञातपितृकः केनचित् द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रार्थः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन् , पिता ते सर्वलोकाधिपतिर्गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यधैर्यपराक्रमादिगुणगणसम्पन्नः त्वामेव नष्टं

---

पुरुषैरर्थ्यमानत्वात्पुरुषार्थत्वम् । अनवधिकातिशयत्वाच्च तस्य परमत्वमित्याशयः । **कौलेयकः** । श्वा तदुपजीवी वा । **स्वस्य चेति** । ब्रह्म स्वेन परेण वाप्यनुभूयमानं निरतिशयानन्दस्वरूपमेवेति तत्प्रतिपादनपरवाक्यस्यैव साक्षात्पुरुषार्थान्वयः । प्रवृत्तिनिवृत्तिपरवाक्यस्य तु तत्साध्यफलसम्बन्धात्पुरुषार्थान्वय इति भावः । **वात्सल्येति** । दोषेपि गुणत्वबुद्धिर्वात्सल्यम् । यथा मातुर्बालकविषये । सौशील्यं सुस्वभावत्वम् । स्वगृह इव संग्रामे प्रवेशनसामर्थ्यं शौर्यम् । अभीरुत्वमिति यावत् । वीर्यमश्रान्तिः ॥४॥

पुत्रं दिदृक्षुः पुरवरे तिष्ठतीति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत् तदानीमेवाहं तावत् जीवतः पुत्रोऽस्मत्पिता च सर्वसम्पत्समृद्ध इति निरतिशयहर्षसमन्वितो भवति । राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा अवाप्तसमस्तपुरुषार्थो भवति । पश्चात् तावुभौ संगच्छेते चेति ।

यत्पुनः परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवत् नार्थसद्भावे प्रामाण्यमिति ।

तदसत् । अर्थसद्भावाभावे निश्चिते ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति । बालातुरादीनामप्यर्थसद्भावभ्रान्त्यैव हर्षाद्युत्पत्तिः । तेषामेव तस्मिन्नपि ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत, ततस्तदानीमेव हर्षादयो निवर्तेरन् । औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात् । अतो, ' यतो वा इमानि ' ( तै. ३।१।१ ) इत्यादिवाक्यमखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सर्वज्ञसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् ॥ ४ ॥

## ॥ इति श्रीभाष्ये चतुःसूत्री समाप्ता ॥

---

इति श्रीमद्विद्वन्मुकुटरत्नभास्करशास्त्र्यन्तेवासिसकलविद्यापारंगतरामशास्त्रिच्छात्रेण तच्चरणप्रसादलब्धज्ञानलवप्रोत्साहितेनाभ्यङ्करोपाह्ववासुदेवशास्त्रिणा विरचितायां श्रीभाष्यव्याख्यायां समासोक्तौ चतुःसूत्री समाप्तिमगमत् ॥

# चतुःसूत्रीस्थ–श्रीभाष्योद्धृत–श्रुतिसूत्रगीताविष्णु- पुराणनाथमुन्यादिवाक्यानां सूचीपत्रम् ।



तत्रश्रुतयः

**ब्रह्मसूत्राणि.**

**विष्णुपुराणस्थवाक्यानि.**

नाथमुन्यादिवाक्यानि

# शुद्धिपत्रम् ।



| शुद्धम् । | पृ. | पं. |
|---|---|---|
| श्रीभाष्यसिन्धा | १ | १० |
| धानिकस्यैव | ४ | १ |
| गृह्यते । | ४ | १ |
| त्वासम्भवा | ५ | १२ |
| प्रधानं यस्या | ५ | १३ |
| श्रेयःसाधनं | ५ | २१ |
| न्यायैर्निरूप्य | ९ | २७ |
| रिहरा स्यात् । | १० | १० |
| साधनानुमहे | १२ | १५ |
| संहितफल | १३ | २६ |
| मुपास्से | १८ | ७ |
| इत्यनेनैका | १९ | १ |
| सिद्धान्त्विति | १९ | २१ |
| उक्तम् | २० | ३ |
| ब्रह्मलोकः | २२ | ७ |
| तत्स्थिरत्वा | २४ | १० |
| उपादाना | २४ | १६ |
| र्नाहैव | २५ | ३ |
| तै. ब्रा. २।८।९।३ | २९ | १० |
| तै. ब्रा. २।८।९।४ | ३० | १ |
| प्रकेतम् । प्रकर्षेण ज्ञानुमशक्यम् । | ३० | १६ |
| ज्योतिष्टोमेन | ३४ | १ |
| तद्बुद्ध्या | ३४ | १८ |
| धर्मः । अपि तु | ३६ | ५ |
| सर्वेषां | ३८ | २३ |
| तत्स्मरणा | ३९ | ८ |
| भावः । | ३९ | २७ |
| काराः । विशे | ४० | १९ |
| मनुभूते | ४१ | २ |
| तस्मादिति । | ४६ | १० |
| सङ्ख्याय | ४७ | २१ |
| दर्शनात् । | ५० | ५ |
| पृथक्स्थि | ५२ | ५ |
| स्मिन् देशे | ५५ | १२ |
| तस्मिन्काले | ५५ | २८ |
| नियमोऽस्तीति | ५८ | ७ |
| दिप्विति । | ५८ | २१ |
| ढश्येत् | ५९ | ७ |
| साधयत् | ५९ | ९ |
| चेत् तस्याः | ६० | १० |
| मिथ्याभूता | ६१ | १४ |
| कञ्चित्प्रति | ६३ | १० |
| कञ्चित्प्राति | ६३ | ११ |
| एतत्स्वभा | ६४ | ४ |
| प्रकाशो न | ६९ | २६ |
| प्रतीतेः । | ७० | १८ |
| मपेक्ष्यो | ७२ | ४ |
| श्चित्सम्य | ७२ | १३ |
| तथोक्तम्— | ७३ | ९ |
| साधनानुम | ७३ | २७ |
| त्प्रकाशनम् । | ७४ | १ |
| भवेत् । | ७४ | ८ |
| साक्षिशून्य | ७५ | २ |
| ज्ञानाविषयो | ७५ | १४ |
| बध्नाति | ७५ | २० |
| विरुद्धयो | ७६ | ११ |
| यथा तव | ७७ | १४ |

| शुद्धम् । | पृ. | पं. | शुद्धम् । | पृ. | पं. |
| --- | --- | --- | --- | --- | --- |
| त्तुनया... | ८० | ४ | नुपपत्ति | १२३ | २० |
| ( वि. पु. ६।७।१० ) । | ८२ | ८ | तावद्भान्ति | १२४ | ८ |
| आतिसूक्ष्म | ८२ | १६ | णोऽर्थाना | १३० | २५ |
| चेत्-न । एतद्बु | ८६ | ४ | यज् | १३४ | १४ |
| नैवम् । | ८६ | ९ | तज्ज्ञान | १३४ | १५ |
| तात्पर्यम्... | ८८ | २४ | तज्ज्ञान | १३५ | २ |
| भेदेने | ८९ | ३ | दिहेतुभूत | १३५ | १४ |
| वाङ्मनस | ९३ | १२ | मयोपलब्धि | १३६ | १ |
| ब्देन गन्धा | १०० | २४ | प्रतीयमान | १३६ | २४ |
| धिभर्ति | १०२ | २ | मेवेतर | १३६ | २८ |
| करण्येन | १०७ | २३ | त्पण्डम्, | १४० | १ |
| रुत्स्नस्या | ११० | १ | शङ्खादौ | १४२ | ११ |
| तद्व्यतिरेके | ११० | २ | शङ्खादि | १४२ | ११ |
| षड्जादि | ११२ | १६ | सूत्रार्थः । | १४२ | १६ |
| शब्देन स्वत्य | ११२ | २१ | तद्ग्रहण | १४३ | १ |
| त्तद्द्रव्य | ११३ | १ | त्वम्, | १४४ | ९ |
| कारेण प्र | ११३ | २२ | पारमा | १४४ | ११ |
| मधीयते | ११४ | १० | तद्रहितत्वा | १४५ | २५ |
| रोयम | ११४ | १३ | ऽचित्सम | १४६ | १० |
| तद्द्रव्य | ११५ | ६ | ऽसद्भाव | १४६ | १२ |
| सूक्ष्म्- | ११५ | ७ | सत्यम्, तमःशब्देनाचित्स | १४६ | १४ |
| लिङ्गाच्च | ११६ | १ | सम्यग्व्यव | १५३ | ६ |
| मान्त्री काम | ११६ | ८ | तस्तात्कालि | १५४ | १ |
| यथोक्तम्- | ११९ | १ | तत्कर्मा | १५४ | १७ |
| हितम् | ११९ | १६ | यथोक्तम्-... | १५४ | १८ |
| जगत् | १२० | ८ | पादितम् | १५५ | ३ |
| वैक्यानुप | १२० | १५ | तत्पदं | १५६ | ६ |
| चेज्ज्ञान | १२१ | ८ | त्सामानाधि | १५६ | ९ |
| त्तत्पका | १२१ | ९ | ञ्चरन्- | १५९ | १४ |
| निवृत्त्यनुपपत्तिरूपसत्त | १२१ | १५ | करण्येन | १६० | ११ |
| चेन्-न । | १२२ | २ | कृत्स्नस्य | १६१ | १२ |
| | १२३ | ३ | वाच्यत्वं | १६२ | २० |
| | १२३ | ५ | आत्मैका | १६३ | २ |

| शुद्धम् । | पृ. | पं. |
|---|---|---|
| पृथग्ग्रहण | १६३ | १० |
| घत्वानि | १६३ | १३ |
| धिकरण्य | १६४ | ४ |
| देवतेऽहं | १६५ | १७ |
| मितरो | १६६ | ५ |
| १ श्वेताश्वतरोपनिषदि ' म-हिमानमिति ' इति पाठो दृश्यते | १६६ | २८ |
| मत्कृताचिदचित्सं | १६७ | १ |
| जीवे | १६८ | २ |
| भवत् | १६८ | ५ |
| जिघत्सो | १७० | ७ |
| दृग्वेदः | १७१ | १२ |
| स्यात्तथा | १७१ | २५ |
| युभङ्क्ते | १७९ | ५ |
| तज्ज्ञापना | १७९ | ७ |
| अन्तराकाश | १७९ | १४ |
| स्वर्गादिसाध | १८३ | १७ |
| विशेषणत्वे | १८७ | १४ |
| तृकत्व | १९४ | १ |

| शुद्धम् । | पृ. | पं. |
|---|---|---|
| साक्षात्कारं | १९५ | ३ |
| येषां | १९६ | २२ |
| तत्सित्य | १९८ | २ |
| त्पत्तये | १९८ | ८ |
| रागोचर | २०४ | १४ |
| हतिर | २१२ | ११ |
| श्रवणात्, | २१२ | १२ |
| तदेव कार्यनिष्पत्तौ | २१२ | २२ |
| निर्विषय | २१५ | २ |
| द्वस्तुयाथात्म्य | २१६ | ५ |
| ध्यानानन्तर | २१६ | २७ |
| नयोरेक | २१७ | २४ |
| शरीरपातात् | २१७ | २६ |
| सकलवस्तु | २१८ | २ |
| त्रिवर्गसाध | २१८ | २० |
| यदिदमुपा | २१९ | १९ |
| श्रवणीया | २२२ | २४ |
| श्रुतो स्वेन | २२४ | २३ |
| मेव । | २२९ | १ |
| शौर्यवीर्य | २३० | १० |